.. Amarakosha Thesaurus Chapter 2 ..

# ॥ अमरकोश एवं नामलिङ्गाऽनुशासनं खाण्ड २ ॥

अमरकोशे द्वितीयं भूम्यादिकाण्डम् ।

वर्गभेदाः।

(२.०.१) वर्गाः पृथ्वीपुरक्ष्माभृद्वनौषधिमृगादिभिः
(२.०.२) नृब्रह्मक्षत्रविट् शूद्रैः साङ्गोपाङ्गैरिहोदिताः
भूमिवर्गः

(२.१.३) भूर्भूमिरचलाऽनन्ता रसा विश्वम्भरा स्थिता
(२.१.४) धरा धरित्री धरणिः क्षोणिर्ज्या काश्यपी क्षितिः
(२.१.५) सर्वंसहा वसुमती वसुधोर्वी वसुन्धरा
(२.१.६) गोत्रा कुः पृथिवी पृथ्वी क्ष्माऽवनिर्मेदिनी मही
(२.१.७) विपुला गह्वरी धात्री गौरिला कुम्भिनी क्षमा
(२.१.८) भूतधात्री रत्नगर्भा जगती सागराम्बरा
(२.१.९) मृन्मृत्तिका प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिका
(२.१.१०) उर्वरा सर्वसस्याढ्या स्यादूषः क्षारमृत्तिका
(२.१.११) ऊषवानूषरो द्वावप्यन्यलिङ्गौ स्थलं स्थली
(२.१.१२) समानौ मरुधन्वानौ द्वे खिलाप्रहते समे
(२.१.१३) त्रिष्वथो जगती लोको विष्टपं भुवनं जगत्
(२.१.१४) लोकोऽयं भारतं वर्षम् शरावत्यास्तु योऽवधेः
(२.१.१५) देशः प्राग्दक्षिणः प्राच्य उदीच्यः पश्चिमोत्तरः
(२.१.१६) प्रत्यन्तो म्लेच्छदेशः स्यान्मध्यदेशस्तु मध्यमः
(२.१.१७) आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमालयोः
(२.१.१८) नीवृज्जनपदो देशविषयौ तूऽपवर्तनम्
(२.१.१९) त्रिष्वागोष्ठान्नडप्राये नड्वान्नड्वल इत्यपि
(२.१.२०) कुमुद्वान्कुमुदप्राये वेतस्वान्बहुवेतसे
(२.१.२१) शाद्वलः शादहरिते सजम्बाले तु पङ्किलः
(२.१.२२) जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविधः
(२.१.२३) स्त्री शर्करा शर्करिलः शार्करः शर्करावति
(२.१.२४) देश एवादिमावेववमुन्नेयाः सिकतावति
(२.१.२५) देशो नद्यम्बुवृष्ट्यम्बुसंपन्नव्रीहिपालितः
(२.१.२६) स्यान्नदीमातृको देवमातृकश्च यथाक्रमम्
(२.१.२७) सुराज्ञि देशे राजन्वान्स्यात्ततोऽन्यत्र राजवान्
(२.१.२८) गोष्ठं गोस्थानकं तत्तु गौष्ठीनं भूतपूर्वकम्
(२.१.२९) पर्यन्तभूः परिसरः सेतुरालौ स्त्रियां पुमान्
(२.१.३०) वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसकम्
(२.१.३१) अयनम् वर्त्म मार्गाध्वपन्थानः पदवी सृतिः
(२.१.३२) सरणिः पद्धतिः पद्या वर्तन्येकपदीति च
(२.१.३३) अतिपन्थाः सुपन्थाश्च सत्पथश्चार्चितेऽध्वनि
(२.१.३४) व्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः
(२.१.३५) अपन्थास्त्वपथं तुल्ये शृण्गाटकचतुष्पथे
(२.१.३६) प्रान्तरं दूरशून्योऽध्वा कान्तारं वर्त्म दुर्गमम्
(२.१.३७) गव्यूतिः स्त्री क्रोशयुगं नल्वः किष्कुचतुःशतम्
(२.१.३८) घण्टापथः संसरणं तत्पुरस्योपनिष्करम्
(२.१.३९) द्यावापृथिव्यौ रोदस्यौ द्यावाभूमी च रोदसी
(२.१.४०) दिवस्पृथिव्यौ गञ्जा तु रुमा स्याल्लवणाकरः ।इति भूमिवर्गः
पुरवर्गः।

(२.२.४१) पूः स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम् ।अथ पुरवर्गः
(२.२.४२) स्थानीयं निगमोऽन्यत्तु यन्मूलनगरात्पुरम्
(२.२.४३) तच्छाखानगरं वेशो वेश्याजनसमाश्रयः
(२.२.४४) आपणस्तु निषद्यायां विपणिः पण्यवीथिका
(२.२.४५) रथ्या प्रतोली विशिखा स्याच्चयो वप्रमस्त्रियाम्
(२.२.४६) प्राकारो वरणः सालः प्राचीनं प्रातन्तो वृतिः
(२.२.४७) भित्तिः स्त्री कुड्यमेडूकं यदन्तर्न्यस्तकीकसम्
(२.२.४८) गृहं गेहोदवसितं वेश्म सद्म निकेतनम्
(२.२.४९) निशान्तं पस्त्यसदनं भवनागारमन्दिरम्
(२.२.५०) गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालयाः
(२.२.५१) वासः कुटी द्वयोः शाला सभा संजवनं त्विदम्
(२.२.५२) चतुःशालं मुनीनां तु पर्णशालोटजोऽस्त्रियाम्
(२.२.५३) चैत्यमायतनं तुल्ये वाजिशाला तु मन्दुरा
(२.२.५४) आवेशनं शिल्पिशाला प्रपा पानीयशालिका
(२.२.५५) मठश्छात्रादिनिलयो गञ्जा तु मदिरागृहम्
(२.२.५६) गर्भागारं वासगृहमरिष्टं सूतिकागृहम्
(२.२.५७) कुट्टिमोऽस्त्री निबद्धा भूश्चन्द्रशाला शिरोगृहम्
(२.२.५८) वातायनं गवाक्षोऽथ मण्डपोऽस्त्री जनाश्रयः
(२.२.५९) हर्म्यादि धनिनां वासः प्रासादो देवभूभुजाम्
(२.२.६०) सौधोऽस्त्री राजसदनमुपकार्योपकारिका
(२.२.६१) स्वस्तिकः सर्वतोभद्रो नन्द्यावर्तादयोऽपि च
(२.२.६२) विच्छन्दकः प्रभेदा हि भवन्तीश्वरसद्मनाम्
(२.२.६३) स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम्
(२.२.६४) शुद्धान्तश्चावरोधश्च स्यादट्टः क्षौममस्त्रियाम्
(२.२.६५) प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके
(२.२.६६) गृहावग्रहणी देहल्यङ्गणं चत्वराजिरे
(२.२.६७) अधस्ताद्दारुणि शिला नासा दारुपरि स्थितम्

(२.२.६८) प्रच्छन्नमन्तर्द्वारं स्यात्पक्षद्वारं तु पक्षकम्
(२.२.६९) वलीकनीध्रे पटलप्रान्तेऽथ पटलं छदिः
(२.२.७०) गोपानसी तु वलभी छादने वक्रदारुणि
(२.२.७१) कपोतपालिकायां तु विटङ्कं पुंनपुंसकम्
(२.२.७२) स्त्री द्वार्द्वारं प्रतीहारः स्याद्वितर्दिस्तु वेदिका
(२.२.७३) तोरणोऽस्त्री बहिर्द्वारम् पुरद्वारं तु गोपुरम्
(२.२.७४) कूटं पूर्द्वारि यद्धस्तिनखस्तस्मिन्नथ त्रिषु
(२.२.७५) कपाटमररं तुल्ये तद्विष्कम्भोऽर्गलं न ना
(२.२.७६) आरोहणं स्यात्सोपानं निश्रेणिस्त्वधिरोहिणी
(२.२.७७) संमार्जनी शोधनी स्यात्संकरोऽवकरस्तथा
(२.२.७८) क्षिप्ते मुखं निःसरणं संनिवेशो निकर्षणम्
(२.२.७९) समौ संवसथग्रामौ वेश्मभूर्वास्तुरस्त्रियाम्
(२.२.८०) ग्रामान्त उपशल्यं स्यात्सीमसीमे स्त्रियामुभे
(२.२.८१) घोष आभीरपल्ली स्यात्पक्कणः शबरालयः ।इति पुरवर्गः

शैलवर्गः।

(२.३.८२) महीध्रे शिखरिक्ष्माभृदहार्यधरपर्वताः ।अथ शैलवर्गः
(२.३.८३) अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः
(२.३.८४) लोकालोकश्चक्रवालस्त्रिकूटस्त्रिककुत्समौ
(२.३.८५) अस्तस्तु चरमक्ष्माभृदुदयः पूर्वपर्वतः
(२.३.८६) हिमवान्निषधो विन्ध्यो माल्यवान्पारियात्रिकः
(२.३.८७) गन्धमादनमन्ये च हेमकूटादयो नगाः
(२.३.८८) पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्
(२.३.८९) कूटोऽस्त्री शिखरं शृङ्गं प्रपातस्त्वतटो भृगुः
(२.३.९०) कटकोऽस्त्री नितम्बोऽद्रेः स्नुः प्रस्थः सानुरस्त्रियाम्
(२.३.९१) उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः
(२.३.९२) दरी तु कन्दरो वा स्त्री देवखातबिले गुहा
(२.३.९३) गह्वरं गण्डशैलास्तु च्युताः स्थूलोपला गिरेः
(२.३.९४) दन्तकास्तु बहिस्तिर्यक् प्रदेशान्निर्गता गिरेः
(२.३.९५) खनिः स्त्रियामाकरः स्यात्पादाः प्रत्यन्तपर्वताः
(२.३.९६) उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका
(२.३.९७) धातुर्मनःशिलाद्यद्रेर्गैरिकं तु विशेषतः
(२.३.९८) निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे ।इति शैलवर्गः

वनौषधिवर्गः।

(२.४.९९) अटव्यरण्यं विपिनं गहनं काननं वनम् ।अथ वनौषधिवर्गः
(२.४.१००) महारण्यमरण्यानी गृहारामास्तु निष्कुटाः
(२.४.१०१) आरामः स्यादुपवनं कृत्रिमं वनमेव यत्
(२.४.१०२) अमात्यगणिकागेहोपवने वृक्षवाटिका
(२.४.१०३) पुमानाक्रीड उद्यानं राज्ञः साधारणं वनम्
(२.४.१०४) स्यादेतदेव प्रमदवनमन्तःपुरोचितम्
(२.४.१०५) वीथ्यालिरावलिः पङ्क्तिः श्रेणी लेखास्तु राजयः
(२.४.१०६) वन्या वनसमूहे स्यादङ्कुरोऽभिनवोद्भिदि
(२.४.१०७) वृक्षो महीरुहः शाखी विटपी पादपस्तरुः
(२.४.१०८) अनोकहः कुटः शालः पलाशी द्रुद्रुमागमाः
(२.४.१०९) वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिः
(२.४.११०) ओषध्यः फलपाकान्ताः स्युरवन्ध्यह् फलेग्रहिः
(२.४.१११) वन्ध्योऽफलोऽवकेशी च फलवान्फलिनः फली
(२.४.११२) प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः
(२.४.११३) फुल्लश्चैते विकसिते स्युरवन्ध्यादयस्त्रिषु
(२.४.११४) स्थाणुर्वा ना ध्रुवः शङ्कुर्ह्रस्वशाखाशिफः क्षुपः
(२.४.११५) अप्रकाण्डे स्तम्बगुल्मौ वल्ली तु व्रततिर्लता
(२.४.११६) लता प्रतानिनी वीरुद्गुल्मिन्युलप इत्यपि
(२.४.११७) नगाद्यारोह उच्छ्राय उत्सेधश्चोच्छ्रयश्च सः
(२.४.११८) अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधिस्तरोः
(२.४.११९) समे शाखालते स्कन्धशाखाशाले शिफाजटे
(२.४.१२०) शाखाशिफावरोहः स्यान्मूलाच्चाग्रं गता लता
(२.४.१२१) शिरोग्रं शिखरं वा ना मूलं बुध्नोऽङ्घ्रिनामकः
(२.४.१२२) सारो मज्जा नरि त्वक्स्त्री वल्कं वल्कलमस्त्रियाम्
(२.४.१२३) काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित्स्त्रियाम्
(२.४.१२४) निष्कुहः कोटरं वा ना वल्लरिर्मञ्जरिः स्त्रियौ
(२.४.१२५) पत्रं पलाशं छदनं दलं पर्णं छदः पुमान्
(२.४.१२६) पल्लवोऽस्त्री किसलयं विस्तारो विटपोऽस्त्रियाम्
(२.४.१२७) वृक्षादीनां फलं सस्यं वृन्तं प्रसवबन्धनम्
(२.४.१२८) आमे फले शलाटुः स्याच्छुष्के वानमुभे त्रिषु
(२.४.१२९) क्षारको जालकं क्लीबे कलिका कोरकः पुमान्
(२.४.१३०) स्याद्गुच्छकस्तु स्तबकः कुड्मलो मुकुलोऽस्त्रियाम्
(२.४.१३१) स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्
(२.४.१३२) मकरन्दः पुष्परसः परागः सुमनोरजः
(२.४.१३३) द्विहीनं प्रसवे सर्वं हरीतक्यादयः स्त्रियाम्
(२.४.१३४) आश्वत्थवैणवप्लाक्षनैयग्रोधैङ्गुदम् फले
(२.४.१३५) बार्हतं च फले जम्ब्वा जम्बूः स्त्री जम्बु जाम्बवम्
(२.४.१३६) पुष्पे जातीप्रभृतयः स्वलिङ्गाः व्रीहयः फले
(२.४.१३७) विदार्याद्यास्तु मूलेऽपि पुष्पे क्लीबेऽपि पाटला
(२.४.१३८) बोधिद्रुमश्चलदलः पिप्पलः कुञ्जराशनः
(२.४.१३९) अश्वत्थेऽथ कपित्थे स्युर्दधित्थग्राहिमन्मथाः
(२.४.१४०) तस्मिन्दधिफलः पुष्पफलदन्तशठावपि
(२.४.१४१) उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः
(२.४.१४२) कोविदारे चमरिकः कुद्दालो युगपत्रकः
(२.४.१४३) सप्तपर्णो विशालत्वक् शारदो विषमच्छदः
(२.४.१४४) आरग्वधे राजवृक्षशम्पाकचतुरङ्गुलाः
(२.४.१४५) आरेवतव्याधिघातकृतमालसुवर्णकाः
(२.४.१४६) स्युर्जम्बीरे दन्तशठजम्भजम्भीरजम्भलाः
(२.४.१४७) वरुणो वरणः सेतुस्तिक्तशाकः कुमारकः
(२.४.१४८) पुंनागे पुरुषस्तुङ्गः केसरो देववल्लभः
(२.४.१४९) पारिभद्रे निम्बतरुर्मन्दारः पारिजातकः

(२.४.१५०) तिनिशे स्यन्दनो नेमी रथद्रुरतिमुक्तकः
(२.४.१५१) वञ्जुलश्चित्रकृच्चाथ द्वौ पीतनकपीतनौ
(२.४.१५२) आम्रातके मधूके तु गुडपुष्पमधुद्रुमौ
(२.४.१५३) वानप्रस्थमधुष्ठीलौ जलजेऽत्र मधूलकः
(२.४.१५४) पीलौ गुडफलः स्रंसी तस्मिंस्तु गिरिसम्भवे
(२.४.१५५) अक्षोटकन्दरालौ द्वावङ्कोटे तु निकोचकः
(२.४.१५६) पलाशे किंशुकः पर्णो वातपोतोऽथ वेतसे
(२.४.१५७) रथाभ्रपुष्पविदुरशीतवानीरवञ्जुलाः
(२.४.१५८) द्वौ परिव्याधविदुलौ नादेयी चाम्बुवेतसे
(२.४.१५९) शोभाञ्जने शिग्रुतीक्ष्णगन्धकाक्षीवमोचकाः
(२.४.१६०) रक्तोऽसौ मधुशिग्रुः स्यादरिष्टः फेनिलः समौ
(२.४.१६१) बिल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलावपि
(२.४.१६२) प्लक्षो जटी पर्कटी स्यान्न्यग्रोधो बहुपाद्वटः
(२.४.१६३) गालवः शाबरो लोध्रस्तिरीटस्तिल्वमार्जनौ
(२.४.१६४) आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः
(२.४.१६५) कुम्भोलूखलकं क्लीबे कौशिको गुग्गुलुः पुरः
(२.४.१६६) शेलुः श्लेष्मातकः शीत उद्दालो बहुवारकः
(२.४.१६७) राजादनं प्रियालः स्यात्सन्नकद्रुर्धनुःपटः
(२.४.१६८) गम्भारी सर्वतोभद्रा काश्मरी मधुपर्णिका
(२.४.१६९) श्रीपर्णी भद्रपर्णी च काश्मर्यश्चाप्यथ द्वयोः
(२.४.१७०) कर्कन्धूर्बदरी कोलिः कोलं कुवलफेनिले
(२.४.१७१) सौवीरं बदरं घोण्टाप्यथ स्यात्स्वादुकण्टकः
(२.४.१७२) विकङ्कतः सुवावृक्षो ग्रन्थिलो व्याघ्रपादपि
(२.४.१७३) ऐरावतो नागरङ्गो नादेयी भूमिजम्बुका
(२.४.१७४) तिन्दुकः स्फूर्जकः कालस्कन्धश्च शितिसारके
(२.४.१७५) काकेन्दुः कुलकः काकतिन्दुकः काकपीलुके
(२.४.१७६) गोलीढो झाटलो घण्टापाटलिर्मोक्षमुष्ककौ
(२.४.१७७) तिलकः क्षुरकः श्रीमान्समौ पिचुलझावुकौ
(२.४.१७८) श्रीपर्णिका कुमुदिका कुम्भी कैटर्यकट्फलौ
(२.४.१७९) क्रमुकः पट्टिकाख्यः स्यात्पट्टी लाक्षाप्रसादनः
(२.४.१८०) तूदस्तु यूपः क्रमुको ब्रह्मण्यो ब्रह्मदारु च
(२.४.१८१) तूलं च नीपप्रियककदम्बास्तु हरिप्रियः
(२.४.१८२) वीरवृक्षोऽरुष्करोऽग्निमुखी भल्लातकी त्रिषु
(२.४.१८३) गर्दभाण्डे कन्दरालकपीतनसुपार्श्वकाः
(२.४.१८४) प्लक्षश्च तिन्तिडी चिञ्चाम्लिकाथो पीतसारके
(२.४.१८५) सर्जकासनबन्धूकपुष्पप्रियकजीवकाः
(२.४.१८६) साले तु सर्जकार्श्याश्वकर्णकाः सस्यसम्बरः
(२.४.१८७) नदीसर्जो वीरतरुरिन्द्रद्रुः ककुभोऽर्जुनः
(२.४.१८८) राजादनः फलाध्यक्षः क्षीरिकायामथ द्वयोः
(२.४.१८९) इङ्गुदी तापसतरुर्भूर्जे चर्मिमृदुत्वचौ
(२.४.१९०) पिच्छिला पूरणी मोचा स्थिरायुः शाल्मलिर्द्वयोः
(२.४.१९१) पिच्छा तु शाल्मलीवेष्टे रोचनः कूटशाल्मलिः
(२.४.१९२) चिरबिल्वो नक्तमालः करजश्च करञ्जके
(२.४.१९३) प्रकीर्यः पूतिकरजः पूतिकः कलिमारकः
(२.४.१९४) करञ्जभेदाः षड्ग्रन्थो मर्कट्यङ्गारवल्लरी
(२.४.१९५) रोही रोहितकः प्लीहशत्रुर्दाडिमपुष्पकः
(२.४.१९६) गायत्री बालतनयः खदिरो दन्तधावनः
(२.४.१९७) अरिमेदो विट्खदिरे कदरः खदिरे सिते
(२.४.१९८) सोमवल्कोऽप्यथ व्याघ्रपुच्छगन्धर्वहस्तकौ
(२.४.१९९) एरण्ड उरुबूकश्च रुचकश्चित्रकश्च सः
(२.४.२००) चञ्चुः पञ्चाङ्गुलो मण्डवर्धमानव्यडम्बकाः
(२.४.२०१) अल्पा शमी शमीरः स्याच्छमी सक्तुफला शिवा
(२.४.२०२) पिण्डीतको मरुबकः श्वसनः करहाटकः
(२.४.२०३) शल्यश्च मदने शक्रपादपः पारिभद्रकः
(२.४.२०४) भद्रदारु द्रुकिलिमं पीतदारु च दारु च
(२.४.२०५) पूतिकाष्ठं च सप्त स्युर्देवदारुण्यथ द्वयोः
(२.४.२०६) पाटलिः पाटलामोघा काचस्थाली फलेरुहा
(२.४.२०७) कृष्णवृन्ता कुबेराक्षी श्यामा तु महिलाह्वया
(२.४.२०८) लता गोवन्दनी गुन्द्रा प्रियङ्गुः फलिनी फली
(२.४.२०९) विष्वक्सेना गन्धफली कारम्भा प्रियकश्च सा
(२.४.२१०) मण्डूकपर्णपत्त्रोर्णनटकट्वङ्गटुण्टुकाः
(२.४.२११) स्योनाकशुकनासर्क्षदीर्घवृन्तकुटन्नटाः
(२.४.२१२) अमृता च वयःस्था च त्रिलिङ्गस्तु बिभीतकः
(२.४.२१३) नाक्षस्तुषः कर्षफलो भूतावासः कलिद्रुमः
(२.४.२१४) अभया त्वव्यथा पथ्या कायस्था पूतनामृता
(२.४.२१५) करीतकी हैमवती चेतकी श्रेयसी शिवा
(२.४.२१६) पीतद्रुः सरलः पूतिकाष्ठं चाथ द्रुमोत्पलः
(२.४.२१७) कर्णिकारः परिव्याधो लकुचो लिकुचो डहुः
(२.४.२१८) पनसः कण्टकिफलो निचुलो हिज्जलोऽम्बुजः
(२.४.२१९) काकोदुम्बरिका फल्गुर्मलयूर्जघनेफला
(२.४.२२०) अरिष्टः सर्वतोभद्रहिङ्गुनिर्यासमालकाः
(२.४.२२१) पिचुमन्दश्च निम्बेऽथ पिच्छिलागुरुशिंशपा
(२.४.२२२) कपिला भस्मगर्भा सा शिरीषस्तु कपीतनः
(२.४.२२३) भण्डिलोऽप्यथ चाम्पेयश्चम्पको हेमपुष्पकः
(२.४.२२४) एतस्य कलिका गन्धफली स्यादथ केसरे
(२.४.२२५) बकुलो वञ्जुलोऽशोके समौ करकदाडिमौ
(२.४.२२६) चाम्पेयः केसरो नागकेसरः काञ्चनाह्वयः
(२.४.२२७) जया जयन्ती तर्कारी नादेयी वैजयन्तिका
(२.४.२२८) श्रीपर्णमग्निमन्थः स्यात्कणिका गणिकारिका
(२.४.२२९) जयोऽथ कुटजः शक्रो वत्सको गिरिमल्लिका
(२.४.२३०) एतस्यैव कलिङ्गेन्द्रयवभद्रयवं फले
(२.४.२३१) कृष्णपाकफलाविग्नसुषेणाः करमर्दके
(२.४.२३२) कालस्कन्धस्तमालः स्यात्तापिच्छोऽप्यथ सिन्दुके
(२.४.२३३) सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि
(२.४.२३४) वेणी गरा गरी देवताडो जीमूत इत्यपि
(२.४.२३५) श्रीहस्तिनी तु भूरुण्डी तृणशून्यं तु मल्लिका

(२.४.२३६) भूपदी शीतभीरुश्च सैवास्फोटा वनोद्भवा
(२.४.२३७) शेफालिका तु सुवहा निर्गुण्डी नीलिका च सा
(२.४.२३८) सितासौ श्वेतसुरसा भूतवेश्यथ मागधी
(२.४.२३९) गणिका यूथिकाम्बष्ठा सा पीता हेमपुष्पिका
(२.४.२४०) अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता
(२.४.२४१) सुमना मालती जातिः सप्तला नवमालिका
(२.४.२४२) माध्यं कुन्दं रक्तकस्तु बन्धूको बन्धुजीवकः
(२.४.२४३) सहा कुमारी तरणिरम्लानस्तु महासहा
(२.४.२४४) तत्र शोणे कुरबकस्तत्र पीते कुरकण्टकः
(२.४.२४५) नीली झिण्टी द्वयोर्बाणा दासी चार्तगलश्च सा
(२.४.२४६) सैरेयकस्तु झिण्टी स्यात्तस्मिन्कुरबकोऽरुणे
(२.४.२४७) पीता कुरण्टको झिण्टी तस्मिन्सहचरी द्वयोः
(२.४.२४८) ओण्ड्रपुष्पं जपापुष्पं वज्रपुष्पं तिलस्य यत्
(२.४.२४९) प्रतिहासशतप्रासचण्डातहयमारकाः
(२.४.२५०) करवीरे करीरे तु क्रकरग्रन्थिलावुभौ
(२.४.२५१) उन्मत्तः कितवो धूर्तो धत्तूरः कनकाह्वयः
(२.४.२५२) मातुलो मदनश्चास्य फले मातुलपुत्रकः
(२.४.२५३) फलपूरो बीजपूरो रुचको मातुलुङ्गके
(२.४.२५४) समीरणो मरुबकः प्रस्थपुष्पः फणिज्जकः
(२.४.२५५) जम्बीरोऽप्यथ पर्णासे कठिञ्जरकुठेरकौ
(२.४.२५६) सितेऽर्जकोऽत्र पाठी तु चित्रको वह्निसंज्ञकः
(२.४.२५७) अर्काह्ववसुकास्फोटगणरूपविकीरणाः
(२.४.२५८) मन्दारश्चार्कपर्णोऽत्र शुक्लेऽलर्कप्रतापसौ
(२.४.२५९) शिवमल्ली पाशुपत एकाष्ठीलो बुको वसुः
(२.४.२६०) वन्दा वृक्षादनी वृक्षरुहा जीवन्तिकेत्यपि
(२.४.२६१) वत्सादनी छिन्नरुहा गुडूची तन्त्रिकामृता
(२.४.२६२) जीवन्तिका सोमवल्ली विशल्या मधुपर्ण्यपि
(२.४.२६३) मूर्वा देवी मधुरसा मोरटा तेजनी स्रवा
(२.४.२६४) मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि
(२.४.२६५) पाटाम्बष्टा विद्धकर्न्णी स्थापनी श्रेयसी रसा
(२.४.२६६) एकाष्टीला पापचेली प्राचीना वनतिक्तिका
(२.४.२६७) कटुः कटम्भराशोकरोहिणी कटुरोहिणी
(२.४.२६८) मत्स्यपित्ता कृष्णभेदी चक्राङ्गी शकुलादनी
(२.४.२६९) आत्मगुप्ताजहाव्यण्डा कण्डूरा प्रावृषायणी
(२.४.२७०) ऋष्यप्रोक्ता शूकशिम्बिः कपिकच्छुश्च मर्कटी
(२.४.२७१) चित्रोपचित्रा न्यग्रोधी द्रवन्ती शम्बरी वृशा
(२.४.२७२) प्रत्यक्श्रेणी सुतश्रेणी रण्डा मूषिकपर्ण्यपि
(२.४.२७३) अपामार्गः शैखरिको धामार्गवमयूरकौ
(२.४.२७४) प्रत्यक्पर्णी केशपर्णी किणिही खरमञ्जरी
(२.४.२७५) हञ्जिका ब्राम्हणी पद्मा भर्गी ब्राह्मणयष्टिका
(२.४.२७६) अङ्गारवल्ली बालेयशाकबर्बरवर्धकाः
(२.४.२७७) मञ्जिष्टा विकसा जिङ्गी समङ्गा कालमेषिका
(२.४.२७८) मण्डूकपर्णी मण्डीरी भण्डी योजनवल्ल्यपि
(२.४.२७९) यासो यवासो दुःस्पर्शो धन्वयासः कुनाशकः
(२.४.२८०) रोदनी कच्छुरानन्ता समुद्रान्ता दुरालभा
(२.४.२८१) पृश्निपर्णी पृथक्पर्णी चित्रपर्ण्यङ्घ्रिवल्लिका
(२.४.२८२) क्रोष्टुविन्ना सिंहपुच्छी कलशी धावनी गुहा
(२.४.२८३) निदिग्धिका स्पृशी व्याघ्री बृहती कण्टकारिका
(२.४.२८४) प्रचोदनी कुली क्षुद्रा दुःस्पर्शा राष्ट्रिकेत्यपि
(२.४.२८५) नीली काला क्लीतकिका ग्रामीणा मधुपर्णिका
(२.४.२८६) रञ्जनी श्रीफली तुत्था द्रोणी दोला च नीलिनी
(२.४.२८७) अवल्गुजः सोमराजी सुवल्लिः सोमवल्लिका
(२.४.२८८) कालमेषी कृष्णफली बाकुची पूतिफल्यपि
(२.४.२८९) कृष्णोपकुल्या वैदेही मागधी चपला कणा
(२.४.२९०) उषणा पिप्पली शौण्डी कोलाथ करिपिप्पली
(२.४.२९१) कपिवल्ली कोलवल्ली श्रेयसी वशिरः पुमान्
(२.४.२९२) चव्यं तु चविका काकचिञ्चीगुञ्जे तु कृष्णला
(२.४.२९३) पलंकषा त्विक्षुगन्धा श्वदंष्ट्रा स्वादुकण्टकः
(२.४.२९४) गोकण्टको गोक्षुरको वनशृन्ङ्गाट इत्यपि
(२.४.२९५) विश्वा विषा प्रतिविषातिविषोपविषारुणा
(२.४.२९६) शृन्गी महौषधं चाथ क्षीरावी दुग्धिका समे
(२.४.२९७) शतमूली बहुसुताभीरूरिन्दीवरी वरी
(२.४.२९८) ऋष्यप्रोक्ताभीरुपत्रीनारायण्यः शतावरी
(२.४.२९९) अहेरुरथ पीतद्रुकालीयकहरिद्रवः
(२.४.३००) दार्वी पचंपचा दारुहरिद्रा पर्जनीत्यपि
(२.४.३०१) वचोग्रगन्धा षड्ग्रन्था गोलोमी शतपर्विका
(२.४.३०२) शुक्ला हैमवती वैध्यमातृसिंह्यौ तु वाशिका
(२.४.३०३) वृषोऽटरूषः सिंहास्यो वासको वाजिदन्तकः
(२.४.३०४) आस्फोटा गिरिकर्णी स्याद्विष्णुक्रान्तापराजिता
(२.४.३०५) इक्षुगन्धा तु काण्डेक्षुकोकिलाक्षेक्षुरक्षुराः
(२.४.३०६) शालेयः स्याच्छीतशिवश्छत्रा मधुरिका मिसिः
(२.४.३०७) मिश्रेयाप्यथ सीहुण्डो वज्रः स्नुक्स्त्री स्नुही गुडा
(२.४.३०८) समन्तदुग्धाथो वेल्लममोघा चित्रतण्डुला
(२.४.३०९) तण्डुलश्च कृमिघ्नश्च विडङ्गं पुंनपुंसकम्
(२.४.३१०) बला वाट्यालका घण्टारवा तु शणपुष्पिका
(२.४.३११) मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च
(२.४.३१२) सर्वानुभूतिः सरला त्रिपुटा त्रिवृता त्रिवृत्
(२.४.३१३) त्रिभण्डी  रोचनी श्यामापालिन्ध्यौ तु सुषेणिका
(२.४.३१४) काला मसूरविदलार्धचन्द्रा कालमेषिका
(२.४.३१५) मधुकं क्लीतकं यष्टिमधुकं मधुयष्टिका
(२.४.३१६) विदारी क्षीरशुक्लेक्षुगन्धा क्रोष्टी तु या सिता
(२.४.३१७) अन्या क्षीरविदारी स्यान्महाश्वेतर्क्षगन्धिका
(२.४.३१८) लाङ्गली शारदी तोयपिप्पली शकुलादनी
(२.४.३१९) खराश्वा कारवी दीप्यो मयूरो लोचमस्तकः
(२.४.३२०) गोपी श्यामा शारिवा स्यादनन्तोत्पलशारिवा
(२.४.३२१) योग्यमृद्धिः सिद्धिलक्ष्म्यौ वृद्धेरप्याह्वया इमे

(२.४.३२२) कदली वारणबुसा रम्भा मोचांशुमत्फला
(२.४.३२३) काष्ठीला मुद्गपर्णी तु काकमुद्गा सहेत्यपि
(२.४.३२४) वार्ताकी हिङ्गुली सिंही भण्टाकी दुष्प्रधर्षिणी
(२.४.३२५) नाकुली सुरसा रास्ना सुगन्धा गन्धनाकुली
(२.४.३२६) नकुलेष्टा भुजंगाक्षी छत्राकी सुवहा च सा
(२.४.३२७) विदारिगन्धांशुमती सालपर्णी स्थिरा ध्रुवा
(२.४.३२८) तुण्डिकेरी समुद्रान्ता कार्पासी बदरेति च
(२.४.३२९) भारद्वाजी तु सा वन्या शृङ्गी तु ऋषभो वृशः
(२.४.३३०) गाङ्गेरुकी नागबला झषा ह्रस्वगवेधुका
(२.४.३३१) धामार्गवो घोशकः स्यान्महाजाली स पीतकः ८८३
(२.४.३३२) ज्योत्स्नी पटोलिका जाली नादेयी भूमिजम्बुका
(२.४.३३३) स्याल्लाङ्गलिक्यग्निशिखा काकाङ्गी काकनासिका
(२.४.३३४) गोधापदी तु सुवहा मुसली तालमूलिका
(२.४.३३५) अजशृङ्गी विषाणी स्याद्गोजिह्वादार्विके समे
(२.४.३३६) ताम्बूलवल्ली तम्बूली नागवल्ल्यप्यथ द्विजा
(२.४.३३७) हरेणू रेणुका कौन्ती कपिला भस्मगन्धिनी
(२.४.३३८) एलावालुकमैलेयं सुगन्धि हरिवालुकम्
(२.४.३३९) वालुकं चाथ पालङ्क्यां मुकुन्दः कुन्दकुन्दुरू
(२.४.३४०) बालं ह्रीबेरबर्हिष्ठोदीच्यं केशाम्बुनाम च
(२.४.३४१) कालानुसार्यवृद्धाश्मपुष्पशीतशिवानि तु
(२.४.३४२) शैलेयं तालपर्णी तु दैत्या गन्धकुटी मुरा
(२.४.३४३) गन्धिनी गजभक्ष्या तु सुवहा सुरभी रसा
(२.४.३४४) महेरणा कुन्दुरुकी सल्लकी ह्लादिनीति च
(२.४.३४५) अग्निज्वालासुभिक्षे तु धातकी धातुपुष्पिका
(२.४.३४६) पृथ्वीका चन्द्रवालैला निष्कुटिर्बहिलाथ सा
(२.४.३४७) सूक्ष्मोपकुञ्चिका तुत्था कोरङ्गी त्रिपुटा त्रुटिः
(२.४.३४८) व्याधिः कुष्टं पारिभाव्यं वाप्यं पाकलमुत्पलम्
(२.४.३४९) शङ्खिनी चोरपुष्पी स्यात्केशिन्यथ वितुन्नकः
(२.४.३५०) झटामलाज्झटा ताली शिवा तामलकीति च
(२.४.३५१) प्रपौण्डरीकं पौण्डर्यमथ तुन्नः कुबेरकः
(२.४.३५२) कुणिः कच्छः कान्तलको नन्दिवृक्षोऽथ राक्षसी
(२.४.३५३) चण्डा धनहरी क्षेमदुष्पत्रगणहासकाः
(२.४.३५४) व्याडायुधं व्याघ्रनखं करजं चक्रकारकम्
(२.४.३५५) सुषिरा विद्रुमलता कपोताङ्घ्रिर्नटी नली
(२.४.३५६) धमन्यञ्जनकेशी च हनुर्हट्टविलासिनी
(२.४.३५७) शुक्तिः शङ्खः खुरः कोलदलं नखमथाढकी
(२.४.३५८) काक्षी मृत्स्ना तुवरिका मृत्तालकसुराष्ट्रजे
(२.४.३५९) कुटन्नटं दाशपुरं वानेयं परिपेलवम्
(२.४.३६०) प्लवगोपुरगोनर्दकैवर्तीमुस्तकानि च
(२.४.३६१) ग्रन्थिपर्णं शुकं बर्हं पुष्पं स्थौणेयकुक्कुरे
(२.४.३६२) मरुन्माला तु पिशुना स्पृक्का देवी लता लघुः
(२.४.३६३) समुद्रान्ता वधूः कोटिवर्षा लङ्कोपिकेत्यपि
(२.४.३६४) तपस्विनी जटामांसी जटिला लोमशामिषी
(२.४.३६५) त्वक्पत्रमुत्कटं भृङ्गं त्वचं चोचं वराङ्गकम्
(२.४.३६६) कर्चूरको द्राविडकः काल्पको वेधमुख्यकः
(२.४.३६७) ओषध्यो जातिमात्रे स्युरजातौ सर्वमौषधम्
(२.४.३६८) शाकाख्यं पत्रपुष्पादि तण्डुलीयोऽल्पमारिषः
(२.४.३६९) विशल्याग्निशिखानन्ता फलिनी शक्रपुष्पिका
(२.४.३७०) स्याद्दक्षगन्धा छगलान्त्रयावेगी वृद्धदारकः
(२.४.३७१) जुङ्गो ब्रम्ही तु मत्स्याक्षी वयःस्था सोमवल्लरी
(२.४.३७२) पटुपर्णी हैमवती स्वर्णक्षीरी हिमावती
(२.४.३७३) हयपुच्छी तु काम्बोजी माषपर्णी महासहा
(२.४.३७४) तुण्डिकेरी रक्तफला बिम्बिका पीलुपर्ण्यपि
(२.४.३७५) बर्बरा कबरी तुङ्गी खरपुष्पाजगन्धिका
(२.४.३७६) एलापर्णी तु सुवहा रास्ना युक्तरसा च सा
(२.४.३७७) चाङ्गेरी चुक्रिका दन्तशटाम्बष्ठाम्ललोणिका
(२.४.३७८) सहस्रवेधी चुक्रोऽम्लवेतसः शतवेध्यपि
(२.४.३७९) नमस्कारी गण्डकारी समङ्गा खदिरेत्यपि
(२.४.३८०) जीवन्ती जीवनी जीवा जीवनीया मधुस्रवा
(२.४.३८१) कूर्चशीर्षो मधुरकः शृङ्गह्रस्वाङ्गजीवकाः
(२.४.३८२) किराततिक्तो भूनिम्बोऽनार्यतिक्तोऽथ सप्तला
(२.४.३८३) विमला सातला भूरिफेना चर्मकषेत्यपि
(२.४.३८४) वायसोली स्वादुरसा वयःस्थाथ मकूलकः
(२.४.३८५) निकुम्भो दन्तिका प्रत्यक्श्रेण्युदुम्बरपर्ण्यपि
(२.४.३८६) अजमोदा तूग्रगन्धा ब्रह्मदर्भा यवानिका
(२.४.३८७) मूले पुष्करकाश्मीरपद्मपत्राणि पौष्करे
(२.४.३८८) अव्यथातिचरा पद्मा चारटी पद्मचारिणी
(२.४.३८९) काम्पिल्यः कर्कशश्चन्द्रो रक्ताङ्गो रोचनीत्यपि
(२.४.३९०) प्रपुन्नाडस्त्वेडगजो दद्रुघ्नश्चक्रमर्दकः
(२.४.३९१) पद्माट उरणाख्यश्च पलाण्डुस्तु सुकन्दकः
(२.४.३९२) लतार्कदुद्रुमौ तत्र हरितेऽथ महौषधम्
(२.४.३९३) लशुनं गृञ्जनारिष्टमहाकन्दरसोनकाः
(२.४.३९४) पुनर्नवा तु शोथघ्नी वितुन्नं सुनिषण्णकम्
(२.४.३९५) स्याद्वाअतकः शीतलोऽपराजिता शणपर्ण्यपि
(२.४.३९६) पारावताङ्घ्रिः कटभी पण्या ज्योतिष्मती लता
(२.४.३९७) वार्षिकं त्रायमाणा स्यात्त्रायन्ती बलभद्रिका
(२.४.३९८) विष्वक्सेनप्रिया गृष्टिर्वाराही बदरेत्यपि
(२.४.३९९) मार्कवो भृङ्गराजः स्यात्काकमाची तु वायसी
(२.४.४००) शतपुष्पा सितच्छत्रातिच्छत्रा मधुरा मिसिः
(२.४.४०१) अवाक्पुष्पी कारवी च सरणा तु प्रसारिणी
(२.४.४०२) तस्यां कटंभरा राजबला भद्रबलेत्यपि
(२.४.४०३) जनी जतूका रजनी जतुकृच्चक्रवर्तिनी
(२.४.४०४) संस्पर्शाथ शटी गन्धमूली षड्ग्रन्थिकेत्यपि
(२.४.४०५) कर्चूरोऽपि पलाशोऽथ कारवेल्लः कठिल्लकः
(२.४.४०६) सुषवी चाथ कुलकं पतोलस्तिक्तकः पटुः
(२.४.४०७) कूष्माण्डकस्तु कर्कारुरुर्वारुः कर्कटी स्त्रियौ

(२.४.४०८) इक्ष्वाकुः कटुतुम्बी स्यात्तुम्ब्यलाबूरुभे समे

(२.४.४०९) चित्रा गवाक्षी गोडुम्बा विशाला त्विन्द्रवारुणी

(२.४.४१०) अर्शोघ्नः सूरणः कन्दो गण्डीरस्तु समष्ठिला

(२.४.४११) कलम्ब्युपोदिका स्त्री तु मूलकं हिलमोचिका

(२.४.४१२) वास्तुकं शाकभेदाः स्युर्दूर्वा तु शतपर्विका

(२.४.४१३) सहस्रवीर्याभार्गव्यौ रुहानन्ताथ सा सिता

(२.४.४१४) गोलोमी शतवीर्या च गण्डाली शकुलाक्षका

(२.४.४१५) कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रियाम्

(२.४.४१६) स्याद्भद्रमुस्तको गुन्द्रा चूडाला चक्रलोच्चटा

(२.४.४१७) वंशे त्वक्सारकर्मारत्वाचिसारतृणध्वजाः

(२.४.४१८) शतपर्वा यवफलो वेणुमस्करतेजनाः १७०

(२.४.४१९) वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः

(२.४.४२०) ग्रन्थिर्ना पर्वपरुशी गुन्द्रस्तेजनकः शरः

(२.४.४२१) नडस्तु धमनः पोटकलोऽथो काशमस्त्रियाम्

(२.४.४२२) इक्षुगन्धा पोटगलः पुंसि भूम्नि तु बल्वजाः

(२.४.४२३) रसाल इक्षुस्तद्भेदाः पुण्ड्रकान्तारकादयः

(२.४.४२४) स्याद्वीरणं वीरतरं मूलेऽस्योशीरमस्त्रियाम्

(२.४.४२५) अभयं नलदं सेव्यममृणालं जलाशयम्

(२.४.४२६) लामज्जकं लघुलयमवदाहेष्टकापथे

(२.४.४२७) नडादयस्तृणं गर्मुच्छ्यामाकप्रमुखा अपि

(२.४.४२८) अस्त्री कुशं कुथो दर्भः पवित्रमथ कत्तृणम् १८०

(२.४.४२९) पौरसौगन्धिकध्यामदेवेजग्धकरौहिषम्

(२.४.४३०) छत्रातिच्छत्रपालघ्नौ मालातृणकभूस्तृणे

(२.४.४३१) शष्पं बालतृणम् घासो यवसं तृणमर्जुनम्

(२.४.४३२) तृणानां संहतिस्तृण्या नड्या तु नडसंहतिः

(२.४.४३३) तृणराजाह्वयस्तालो नालिकेरस्तु लाङ्गली

(२.४.४३४) घोण्टा तु पूगः क्रमुको गुवाकः खपुरोऽस्य तु

(२.४.४३५) फलमुद्वेगमेते च हिन्तालसहितास्त्रयः

(२.४.४३६) खर्जूरः केतकी ताली खर्जुरी च तृणद्रुमाः इति वनौषधिवर्गः

## अथ सिंहादि वर्गः

(२.४.४३७) सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः

(२.४.४३८) कण्टीरवो मृगारिपुर्मृगदृष्टिर्मृगाशनः

(२.४.४३९) पुण्डरीकः पञ्चनखचित्रकायमृगद्विषः

(२.४.४४०) शार्दूलद्वीपिनौ व्याघ्रे तरक्षुस्तु मृगादनः १९०

(२.४.४४१) वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः

(२.४.४४२) दंष्ट्री घोणी स्तब्धरोमा क्रोडो भूदार इत्यपि

(२.४.४४३) कपिप्लवंगप्लवगशाखामृगवलीमुखाः

(२.४.४४४) मर्कटो वानरः कीशो वनौका अथ भल्लुके

(२.४.४४५) ऋक्षाच्छभल्लभल्लूका गण्डके खड्गखड्गिनौ

(२.४.४४६) लुलायो महिषो वाहाद्विषत्कासरसैरिभाः

(२.४.४४७) स्त्रियां शिवा भूरिमायगोमायुमृगधूर्तकाः

(२.४.४४८) शृगालवञ्चकक्रोष्टुफेरुफेरवजम्बुकाः

(२.४.४४९) ओतुर्बिडालो मार्जारो वृषदंशक आखुभुक्

(२.४.४५०) त्रयो गौधेरगौधारगौधेया गोधिकात्मजे १०००

(२.४.४५१) श्वावित्तु शल्यस्तल्लोम्नि शलली शललं शलम्

(२.४.४५२) वातप्रमीर्वातमृगः कोकस्त्वीहामृगो वृकः

(२.४.४५३) मृगे कुरङ्गवातायुहरिणाजिनयोनयः

(२.४.४५४) ऐणेयमेण्याश्चर्माध्यमेणस्यैणमुभे त्रिषु

(२.४.४५५) कदली कन्दली चीनश्चमूरुप्रियकावपि

(२.४.४५६) समूरुश्चेति हरिणा अमी अजिनयोनयः

(२.४.४५७) कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहिषाः

(२.४.४५८) गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगाः

(२.४.४५९) गन्धर्वः शरभो रामः सृमरो गवयः शशः

(२.४.४६०) इत्यादयो मृगेन्द्राद्या गवाद्याः पशुजातयः १०१०

(२.४.४६१) अधोगन्ता तु खनको वृकः पुंध्वज उन्दुरः

(२.४.४६२) उन्दुरुर्मूषकोऽप्याखुर्गिरिका बालमूषिका

(२.४.४६३) चुचुन्दरी गन्धमूषी दीर्घदेही तु मूषिका

(२.४.४६४) सरटः कृकलासः स्यान्मुसली गृहगोधिका

(२.४.४६५) लूता स्त्री तन्तुवायोर्णनाभमर्कटकाः समाः

(२.४.४६६) नीलङ्गुस्तु कृमिः कर्णजलौकाः शतपद्युभे

(२.४.४६७) वृश्चिकः शूककीटः स्यादलिद्रुणौ तु वृश्चिके

(२.४.४६८) पारावतः कलरवः कपोतोऽथ शशादनः

(२.४.४६९) पत्री श्येन उलूकस्तु वायसारातिपेचकौ

(२.४.४७०) दिवान्धः कौशिको घूको दिवाभीतो निशाटनः

(२.४.४७१) व्याघ्राटः स्याद्भरद्वाजः खञ्जरीटस्तु खञ्जनः

(२.४.४७२) लोहपृष्ठस्तु कङ्कः स्यादथ चाषः किकीदिविः

(२.४.४७३) कलिङ्गभृङ्गधूम्याटा अथ स्याच्छतपत्रकः १०२०

(२.४.४७४) दार्वाघाटोऽथ सारङ्गः स्तोककश्चातकः समाः

(२.४.४७५) कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः

(२.४.४७६) चटकः कलविङ्कः स्यात्तस्य स्त्री चटका तयोः

(२.४.४७७) पुमपत्ये चाटकैरः स्त्र्यपत्ये चटकैव सा

(२.४.४७८) कर्करेटुः करेटुः स्यात्कृकणक्रकरौ समौ

(२.४.४७९) वनप्रियः परभृतः कोकिलः पिक इत्यपि

(२.४.४८०) काके तु करटारिष्टबलिपुष्टसकृत्प्रजाः

(२.४.४८१) ध्वाङ्क्षात्मघोषपरभृद्बलिभुग्वायसा अपि

(२.४.४८२) स एव च चिरञ्जीवी चैकदृष्टिश्च मौकुलिः

(२.४.४८३) द्रोणकाकस्तु काकोलो दात्यूहः कालकण्ठकः

(२.४.४८४) आतापिचिल्लौ दाक्षाय्यगृध्रौ कीरशुकौ समौ १०३०

(२.४.४८५) क्रुङ्क्रौञ्चोऽथ बकः कह्वः पुष्कराह्वस्तु सारसः

(२.४.४८६) कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः

(२.४.४८७) कादम्बः कलहंसः स्यादुत्क्रोशकुररौ समौ

(२.४.४८८) हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः

(२.४.४८९) राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः

(२.४.४९०) मलिनैर्मल्लिकाक्षास्ते धार्तराष्ट्राः सितेतरैः

(२.४.४९१) शरारिराटिराडिश्च बलाका बिसकण्ठिका

(२.४.४९२) हंसस्य योषिद्वरटा सारसस्य तु लक्ष्मणा

(२.४.४९३) जतुकाजिनपत्रा स्यात्परोष्णी तैलपायिका
(२.४.४९४) वर्वणा मक्षिका नीला सरघा मधुमक्षिका १०४०
(२.४.४९५) पतङ्गिका पुत्तिका स्याद्दंशस्तु वनमक्षिका
(२.४.४९६) दंशी तज्जातिरल्पा स्याद्गन्धोली वरटा द्वयोः
(२.४.४९७) भृङ्गारी झीरुका चीरी झिल्लिका च समा इमाः
(२.४.४९८) समौ पतङ्गशलभौ खद्योतो ज्योतिरिङ्गणः
(२.४.४९९) मधुव्रतो मधुकरो मधुलिण्मधुपालिनः
(२.४.५००) द्विरेफपुष्पलिड् भृङ्ग षट्पद भ्रमरालयः
(२.४.५०१) मयूरो बर्हिणो बर्ही नीलकण्ठो भुजंगभुक्
(२.४.५०२) शिखावलः शिखी केकी मेघनादानुलास्यपि
(२.४.५०३) केका वाणी मयूरस्य समौ चन्द्रकमेचकौ
(२.४.५०४) शिखा चूडा शिखण्डस् तु पिच्छबर्हे नपुंसके
(२.४.५०५) खगे विहङ्गविहगविहङ्गमविहायसः
(२.४.५०६) शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः
(२.४.५०७) पतत्रिपत्रिपतगपतत्पत्त्ररथाण्डजाः
(२.४.५०८) नगौकोवाजिविकिरविविष्किरपतत्रयः
(२.४.५०९) नीडोद्भवाः गरुत्मन्तः पित्सन्तो नभसंगमाः
(२.४.५१०) तेषां विशेषा हारीतो मद्गुः कारण्डवः प्लवः
(२.४.५११) तित्तिरिः कुक्कुभो लावो जीवञ्जीवश्च कोरकः
(२.४.५१२) कोयष्टिकष् टिट्टिभको वर्तको वर्तिकादयः
(२.४.५१३) गरुत्पक्षच्छदाः पत्रं पतत्रं च तनूरुहम्
(२.४.५१४) स्त्री पक्षतिः पक्षमूलं चञ्चुस्त्रोटिरुभे स्त्रियौ
(२.४.५१५) प्रडीनोड्डीनसंडीनान्येताः खगगतिक्रियाः
(२.४.५१६) पेशी कोशो द्विहीनेऽण्डं कुलायो नीडमस्त्रियाम्
(२.४.५१७) पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः
(२.४.५१८) स्त्रीपुंसौ मिथुनं द्वन्द्वं युग्मं तु युगुलं युगम्
(२.४.५१९) समूहे निवहव्यूहसंदोहविसरव्रजाः
(२.४.५२०) स्तोमौघनिकरव्रातवारसंघातसंचयाः
(२.४.५२१) समुदायः समुदयः समवायश्च यो गणः
(२.४.५२२) स्त्रियां तु संहतिर्वृन्दं निकुरम्बं कदम्बकम्
(२.४.५२३) वृन्दभेदाः समैर्वर्गः संघसार्थौ तु जन्तुभिः
(२.४.५२४) सजातीयैः कुलं यूथं तिरश्चां पुंनपुंसकम्
(२.४.५२५) पशूनां समजोऽन्येषां समाजोऽथ सधर्मिणाम्
(२.४.५२६) स्यान्निकायः पुञ्जराशी तूत्करः कूटमस्त्रियाम्
(२.४.५२७) कापोतशौकमायूरतैत्तिरादीनि तद्गणे
(२.४.५२८) गृहासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते ।इति सिंहादिवर्गः
(२.५.५२९) मनुष्या मानुषा मर्त्या मनुजा मानवा नराः ।अथ मनुष्यवर्गः
(२.५.५३०) स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः
(२.५.५३१) स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः
(२.५.५३२) प्रतीपदर्शिनी वामा वनिता महिला तथा
(२.५.५३३) विशेषास्त्वङ्गना भीरुः कामिनी वामलोचना
(२.५.५३४) प्रमदा मानिनी कान्ता ललना च नितम्बिनी
(२.५.५३५) सुन्दरी रमणी रामा कोपना सैव भामिनी
(२.५.५३६) वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी
(२.५.५३७) कृताभिषेका महिषी भोगिन्योऽन्या नृपस्त्रियः
(२.५.५३८) पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी
(२.५.५३९) भार्या जायाथ पुंभूम्नि दाराः स्यात्तु कुटुम्बिनी
(२.५.५४०) पुरंध्री सुचरित्रा तु सती साध्वी पतिव्रता
(२.५.५४१) कृतसापत्निकाध्यूढाधिविन्नाथ स्वयंवरा
(२.५.५४२) पतिंवरा च वर्याथ कुलस्त्री कुलपालिका
(२.५.५४३) कन्या कुमारी गौरी तु नग्निकाऽनागतार्तवा
(२.५.५४४) स्यान्मध्यमा दृष्टरजास्तरुणी युवतिः समे
(२.५.५४५) समाः स्नुषाजनीवध्वश्चिरिण्टी तु सुवासिनी
(२.५.५४६) इच्छावती कामुका स्याद् वृषस्यन्ती तु कामुकी
(२.५.५४७) कान्तार्थिनी तु या याति संकेतं साभिसारिका
(२.५.५४८) पुंश्चली धर्षिणी बन्धक्यसती कुलटेत्वरी
(२.५.५४९) स्वैरिणी पांसुला च स्यादशिश्वी शिशुना विना
(२.५.५५०) अवीरा निष्पतिसुता विश्वस्ताविधवे समे
(२.५.५५१) आलिः सखी वयस्याथ पतिवत्नी सभर्तृका
(२.५.५५२) वृद्धा पलिक्नी प्राज्ञी तु प्रज्ञा प्राज्ञा तु धीमती
(२.५.५५३) शूद्री शूद्रस्य भार्या स्याच्छूद्रा तज्जातिरेव च
(२.५.५५४) आभीरी तु महाशूद्री जातिपुंयोगयोः समा
(२.५.५५५) अर्याणी स्वयमर्या स्यात्क्षत्रिया क्षत्रियाण्यपि
(२.५.५५६) उपाध्यायाप्युपाध्यायी स्यादाचार्यापि च स्वतः
(२.५.५५७) आचार्यानी तु पुंयोगे स्यादर्यी क्षत्रियी तथा
(२.५.५५८) उपाध्यायान्युपाध्यायी पोटा स्त्रीपुंसलक्षणा
(२.५.५५९) वीरपत्नी वीरभार्या वीरमाता तु वीरसूः
(२.५.५६०) जातापत्या प्रजाता च प्रसूता च प्रसूतिका
(२.५.५६१) स्त्री नग्निका कोटवी स्याद्दूतीसंचारिके समे
(२.५.५६२) कात्यायन्यर्धवृद्धा या काषायवसनाऽधवा
(२.५.५६३) सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका
(२.५.५६४) असिक्नी स्यादवृद्धा या प्रेष्याऽन्तःपुरचारिणी
(२.५.५६५) वारस्त्री गणिका वेश्या रूपाजीवाथ सा जनैः
(२.५.५६६) सत्कृता वारमुख्या स्यात्कुट्टनी शम्भली समे
(२.५.५६७) विप्रश्निका त्वीक्षणिका दैवज्ञाथ रजस्वला
(२.५.५६८) स्त्रीधर्मिण्यविरात्रेयी मलिनी पुष्पवत्यपि
(२.५.५६९) ऋतुमत्यप्युदक्यापि स्याद्रजः पुष्पमार्तवम्
(२.५.५७०) श्रद्धालुर्दोहदवती निष्कला विगतार्तवा
(२.५.५७१) आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी
(२.५.५७२) गणिकादेस्तु गाणिक्यं गार्भिणं यौवतं गणे
(२.५.५७३) पुनर्भूर्दिधिषूरूढा द्विस्तस्या दिधिषुः पतिः
(२.५.५७४) स तु द्विजोऽग्रेदिधिषूः सैव यस्य कुटुम्बिनी
(२.५.५७५) कानीनः कन्यकाजातः सुतोऽथ सुभगासुतः
(२.५.५७६) सौभागिनेयः स्यात्पारस्त्रैणेयस्तु परस्त्रियाः
(२.५.५७७) पैतृष्वसेयः स्यात्पैतृष्वस्रीयश्च पितृष्वसुः
(२.५.५७८) सुतो मातृष्वसुश्चैवं वैमात्रेयो विमातृजः

(२.५.५७९) अथ बान्धकिनेयः स्याद्बन्धुलश्चासतीसुतः
(२.५.५८०) कौलटेरः कौलतेयो भिक्षुकी तु सती यदि
(२.५.५८१) तदा कौलटिनेयोऽस्याः कौलतेयोऽपि चात्मजः
(२.५.५८२) आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी
(२.५.५८३) आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे
(२.५.५८४) स्वजाते त्वौरसोरस्यौ तातस्तु जनकः पिता
(२.५.५८५) जनयित्री प्रसूर्माता जननी भगिनी स्वसा
(२.५.५८६) ननान्दा तु स्वसा पत्युर्नप्त्री पौत्री सुतात्मजा
(२.५.५८७) भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्
(२.५.५८८) प्रजावती भ्रातृजाया मातुलानी तु मातुली
(२.५.५८९) पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः
(२.५.५९०) पितुर्भ्राता पितृव्यः स्यान्मातुर्भ्राता तु मातुलः
(२.५.५९१) श्यालाः स्युर्भ्रातरः पत्न्याः स्वामिनो देवृदेवरौ
(२.५.५९२) स्वस्रीयो भागिनेयः स्याज्जमाता दुहितुः पतिः
(२.५.५९३) पितामहः पितृपिता तत्पिता प्रपितामहः
(२.५.५९४) मातुर्मातामहाद्येवं सपिण्डास्तु सनाभयः
(२.५.५९५) समानोदर्यसोदर्यसगर्भ्यसहजाः समाः
(२.५.५९६) सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः
(२.५.५९७) ज्ञातेयं बन्धुता तेषां क्रमाद्भावसमूहयोः
(२.५.५९८) धवः प्रियः पतिर्भर्ता जारस्तूपपतिः समौ
(२.५.५९९) अमृते जारजः कुण्डो मृते भर्तरि गोलकः
(२.५.६००) भ्रात्रीयो भ्रातृजो भ्रातृभगिन्यौ भ्रातरावुभौ
(२.५.६०१) मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ
(२.५.६०२) श्वश्रूश्वशुरौ श्वशुरौ पुत्रौ पुत्रश्च दुहिता च
(२.५.६०३) दंपती जंपती जायापती भार्यापती च तौ
(२.५.६०४) गर्भाशयो जरायुः स्यादुल्बं च कललोऽस्त्रियाम्
(२.५.६०५) सूतिमासो वैजननो गर्भो भ्रूण इमौ समौ
(२.५.६०६) तृतीयाप्रकृतिः शण्ढः क्लीबः पण्दो नपुंसके
(२.५.६०७) शिशुत्वं शैशवं बाल्यं तारुण्यं यौवनं समे
(२.५.६०८) स्यात्स्थाविरं तु वृद्धत्वं वृद्धसंघेऽपि वार्धकम्
(२.५.६०९) पलितं जरसा शौक्ल्यं केशादौ विस्रसा जरा
(२.५.६१०) स्यादुत्तानशया डिम्भा स्तनपा च स्तनंधयी
(२.५.६११) बालस्तु स्यान्माणवको वयस्थस्तरुणो युवा
(२.५.६१२) प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि
(२.५.६१३) वर्षीयान्दशमी ज्यायान्पूर्वजस्त्वग्रियोऽग्रजः
(२.५.६१४) जघन्यजे स्युः कनिष्ठयवीयोऽवरजानुजाः
(२.५.६१५) अमांसो दुर्बलश् छातो बलवान्मांसलोंऽसलः
(२.५.६१६) तुन्दिलस्तुन्दिभस्तुन्दी बृहत्कुक्षिः पिचण्डिलः
(२.५.६१७) अवटीटोऽवनाटश्चावभ्रटो नतनासिके
(२.५.६१८) केशवः केशिकः केशी वलिनो वलिभः समौ
(२.५.६१९) विकलाङ्गस्त्वपोगण्डः खर्वो ह्रस्वश्च वामनः
(२.५.६२०) खरणाः स्यात्खरणसो विग्रस्तु गतनासिकः
(२.५.६२१) खुरणाः स्यात्खुरणसः प्रज्ञुः प्रगतजानुकः
(२.५.६२२) ऊर्ध्वज्ञुरूर्ध्वजानुः स्यात्संज्ञुः संहृतजानुकः
(२.५.६२३) स्यादेडे बधिरः कुब्जे गडुलः कुकरे कुणिः
(२.५.६२४) पृश्निरल्पतनौ श्रोणः पङ्गौ मुण्डस्तु मुण्डिते
(२.५.६२५) वलिरः केकरे खोडे खञ्जस्त्रिषु जरावराः
(२.५.६२६) जडुलः कालकः पिप्लुस्तिलकस्तिलकालकः
(२.५.६२७) अनामयं स्यादारोग्यं चिकित्सा रुक्प्रतिक्रिया
(२.५.६२८) भेषजौषधभैषज्यान्यगदो जायुरित्यपि
(२.५.६२९) स्त्री रुग्रुजा चोपतापरोगव्याधिगदामयाः
(२.५.६३०) क्षयः शोषश्च यक्ष्मा च प्रतिश्यायस्तु पीनसः
(२.५.६३१) स्त्री क्षुत्क्षुतं क्षवः पुंसि कासस्तु क्षवथुः पुमान्
(२.५.६३२) शोफस्तु श्वयथुः शोथः पादस्फोटो विपादिका
(२.५.६३३) किलाससिध्मे कच्छ्वां तु पाम पामा विचर्चिका
(२.५.६३४) कण्डूः खर्जूश्च कण्डूया विस्फोटः पिटकः स्त्रियाम्
(२.५.६३५) व्रणोऽस्त्रियामीर्ममरुः क्लीबे नाडीव्रणः पुमान्
(२.५.६३६) कोठो मण्डलकं कुश्ठश्वित्रे दुर्नामकार्शसी
(२.५.६३७) आनाहस्तु निबन्धः स्याद्ग्रहणीरुक्प्रवाहिका
(२.५.६३८) प्रच्छर्दिका वमिश्च स्त्री पुमांस्तु वमथुः समाः
(२.५.६३९) व्याधिभेदा विद्रधिः स्त्री ज्वरमेहभगंदराः
(२.५.६४०) श्लीपदं पादवल्मीकं केशघ्नस्त्विन्द्रलुप्तकः
(२.५.६४१) अश्मरी मूत्रकृच्छ्रम् स्यात्पूर्वे शुक्रावधेस्त्रिषु
(२.५.६४२) रोगहार्यगदंकारो भिषग्वैद्यौ चिकित्सके
(२.५.६४३) वार्तो निरामयः कल्य उल्लाघो निर्गतो गदात्
(२.५.६४४) ग्लानग्लास्नू आमयावी विकृतो व्याधितोऽपटुः
(२.५.६४५) आतुरोऽभ्यमितोऽभ्यान्तः समौ पामनकच्छुरौ
(२.५.६४६) दद्रुणो दद्रुरोगी स्यादर्शोरोगयुतोऽर्शसः
(२.५.६४७) वातकी वातरोगी स्यात्सातिसारोऽतिसारकी
(२.५.६४८) स्युः क्लिन्नाक्षे चुल्लचिल्लपिल्लाः क्लिन्नेऽक्ष्णि चाप्यमी
(२.५.६४९) उन्मत्त उन्मादवति श्लेष्मलः श्लेष्मणः कफी
(२.५.६५०) न्युब्जो भुग्ने रुजा वृद्धनाभौ तुन्दिलतुन्दिभौ
(२.५.६५१) विलासी सिध्मलोऽन्धोऽदृङ्मूर्च्छाले मूर्तमूर्च्छितौ
(२.५.६५२) शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च
(२.५.६५३) मायुः पित्तं कफः श्लेष्मा स्त्रियां तु त्वगसृग्धरा
(२.५.६५४) पिशितं तरसं मांसं पललं क्रव्यमामिषम्
(२.५.६५५) उत्ततप्तं शुश्कमांसं स्यात्तद्वल्लूरं त्रिलिङ्गकम्
(२.५.६५६) रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितम्
(२.५.६५७) बुक्काग्रमांसं हृदयं हृन्मेदस्तु वपा वसा
(२.५.६५८) पश्चाद्ग्रीवाशिरा मन्या नाडी तु धमनिः शिरा
(२.५.६५९) तिलकं क्लोम मस्तिष्कं गोर्दं किट्टं मलोऽस्त्रियाम्
(२.५.६६०) अन्त्रं पुरीतगुल्मस्तु प्लीहा पुंस्यथ वस्नसा
(२.५.६६१) स्नायुः स्त्रियां कालखण्डयकृती तु समे इमे
(२.५.६६२) सृणिका स्यन्दनी लाला दूषिका नेत्रयोर्मलम्
(२.५.६६३) नासामलं तु सिंघाणं पिञ्जूषं कर्णयोर्मलम्
(२.५.६६४) मूत्रं प्रस्राव उच्चारावस्करौ शमलं शकृत्

(२.५.६६५) पुरीषं गूथवर्चस्कमस्त्री विष्ठाविशौ स्त्रियौ
(२.५.६६६) स्यात्कर्परः कपालोऽस्त्री कीकसं कुल्यमस्थि च
(२.५.६६७) स्याच्छरीरास्थ्नि कंकालः पृष्ठास्थ्नि तु कशेरुका
(२.५.६६८) शिरोस्थनि करोटिः स्त्री पार्श्वास्थनि तु पर्शुका
(२.५.६६९) अङ्गं प्रतीकोऽवयवोऽपघनोऽथ कलेवरम्
(२.५.६७०) गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः
(२.५.६७१) कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः
(२.५.६७२) पादाग्रं प्रपदं पादः पदङ्घ्रिश्चरणोऽस्त्रियाम्
(२.५.६७३) तद् ग्रन्थी घुटिके गुल्फौ पुमान्पार्ष्णिस्तयोरधः
(२.५.६७४) जङ्घा तु प्रसृता जानूरुपर्वाष्ठीवदस्त्रियाम्
(२.५.६७५) सक्थि क्लीबे पुमानूरुस्तत्संधिः पुंसि वङ्क्षणः
(२.५.६७६) गुदं त्वपानं पायुर्ना बस्तिर्नाभेरधो द्वयोः
(२.५.६७७) कटो ना श्रोणिफलकं कटिः श्रोणिः ककुद्मती
(२.५.६७८) पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः
(२.५.६७९) कूपकौ तु नितम्बस्थौ द्वयहीने ककुन्दरे
(२.५.६८०) स्त्रियाम् स्फिचौ कटिप्रोथावुपस्थो वक्ष्यमाणयोः
(२.५.६८१) भगं योनिर्द्वयोः शिश्नो मेढ्रो मेहनशेफसी
(२.५.६८२) मुष्कोऽण्डकोशो वृषणः पृष्ठवंशाधरे त्रिकम्
(२.५.६८३) पिचण्डकुक्षी जठरोदरं तुन्दं स्तनौ कुचौ
(२.५.६८४) चूचुकं तु कुचाग्रं स्यान्न ना क्रोडं भुजान्तरम्
(२.५.६८५) उरो वत्सं च वक्षश्च पृष्ठं तु चरमं तनोः
(२.५.६८६) स्कन्धो भुजशिरोंसोऽस्त्री संधी तस्यैव जत्रुणी
(२.५.६८७) बाहुमूले उभे कक्षौ पार्श्वमस्त्री तयोरधः
(२.५.६८८) मध्यमं चावलग्नं च मध्योऽस्त्री द्वौ परौ द्वयोः
(२.५.६८९) भुजबाहू प्रवेष्टो दोः स्यात्कफोणिस्तु कूर्परः
(२.५.६९०) अस्योपरि प्रगण्डः स्यात्प्रकोष्ठस्तस्य चाप्यधः
(२.५.६९१) मणीबन्धादाकनिष्ठं करस्य करभो बहिः
(२.५.६९२) पञ्चशाखः शयः पाणिस्तर्जनी स्यात्प्रदेशिनी
(२.५.६९३) अङ्गुल्यः करशाखाः स्युः पुंस्यङ्गुष्ठः प्रदेशिनी
(२.५.६९४) मध्यमाऽनामिका चापि कनिष्ठा चेति ताः क्रमात्
(२.५.६९५) पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम्
(२.५.६९६) प्रादेशतालगोकर्णास्तर्जन्यादियुते तते
(२.५.६९७) अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुलः
(२.५.६९८) पाणौ चपेटप्रतलप्रहस्ता विस्तृताङ्गुलौ
(२.५.६९९) द्वौ संहतौ संहततलप्रतलौ वामदक्षिणौ
(२.५.७००) पाणिर्निकुब्जः प्रसृतिस्तौ युतावञ्जलिः पुमान्
(२.५.७०१) प्रकोष्ठे विस्तृतकरे हस्तो मुष्ट्या तु बद्धया
(२.५.७०२) स रत्निः स्यादरत्निस्तु निष्कनिष्ठेन मुष्टिना
(२.५.७०३) व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगनन्तरम्
(२.५.७०४) ऊर्ध्वविस्तृतदोः पाणिर्नृमाने पौरुषं त्रिषु
(२.५.७०५) कण्ठो गलोऽथ ग्रीवायां शिरोधिः कन्धरेत्यपि
(२.५.७०६) कम्बुग्रीवा त्रिरेखा साऽवटुर्घाटा कृकाटिका
(२.५.७०७) वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्
(२.५.७०८) क्लीबे घ्राणं गन्धवहा घोणा नासा च नासिका
(२.५.७०९) ओष्ठाधरौ तु रदनच्छदौ दशनवाससी
(२.५.७१०) अधस्ताच्चिबुकं गण्डौ कपोलौ तत्परा हनुः
(२.५.७११) रदना दशना दन्ता रदास्तालु तु काकुदम्
(२.५.७१२) रसज्ञा रसना जिह्वा प्रान्तावोष्ठस्य सृक्किणी
(२.५.७१३) ललाटमलिकं गोधिरूर्ध्वे दृग्भ्यां भ्रुवौ स्त्रियौ
(२.५.७१४) कूर्चमस्त्री भ्रुवोर्मध्यं तारकाक्ष्णः कनीनिका
(२.५.७१५) लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी
(२.५.७१६) दृग्दृष्टी चास्रु नेत्राम्बु रोदनं चास्रमश्रु च
(२.५.७१७) अपाङ्गौ नेत्रयोरन्तौ कटाक्षोऽपाङ्गदर्शने
(२.५.७१८) कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः
(२.५.७१९) उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम्
(२.५.७२०) चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः
(२.५.७२१) तद्वृन्दे कैशिकं कैश्यमलकाश्चूर्णकुन्तलाः
(२.५.७२२) ते ललाटे भ्रमरकाः काकपक्षः शिखण्डकः
(२.५.७२३) कबरी केशवेशोऽथ धम्मिल्लः संयताः कचाः
(२.५.७२४) शिखा चूडा केशपाशी व्रतिनस्तु सटा जटा
(२.५.७२५) वेणी प्रवेणी शीर्षण्यशिरस्यौ विशदे कचे
(२.५.७२६) पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे
(२.५.७२७) तनूरुहं रोम लोम तद्वृद्धौ श्मश्रु पुम्मुखे
(२.५.७२८) आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम्
(२.५.७२९) दशैते त्रिष्वलंकर्ताऽलंकरिष्णुश्च मण्डितः
(२.५.७३०) प्रसाधितोऽलंकृतश्च भूषितश्च परिष्कृतः
(२.५.७३१) विभ्राड्भ्राजिष्णुरोचिष्णू भूषणं स्यादलंक्रिया
(२.५.७३२) अलंकारस्त्वाभरणं परिष्कारो विभूषणम्
(२.५.७३३) मण्डनं चाथ मुकुटं किरीटं पुंनपुंसकम्
(२.५.७३४) चूडामणिः शिरोरत्नं तरलो हारमध्यगः
(२.५.७३५) वालपाश्या पारितथ्या पत्रपाश्या ललाटिका
(२.५.७३६) कर्णिका तालपत्रं स्यात्कुण्डलं कर्णवेष्टनम्
(२.५.७३७) ग्रैवेयकं कण्ठभूषा लम्बनं स्याल्ललन्तिका
(२.५.७३८) स्वर्णैः प्रालम्बिकाऽथोरःसूत्रिका मौक्तिकैः कृता
(२.५.७३९) हारो मुक्तावली देवच्छन्दोऽसौ शतयष्टिका
(२.५.७४०) हारभेदा यष्टिभेदाद्गुच्छगुच्छार्धगोस्तनाः
(२.५.७४१) अर्धहारो माणवक एकावल्येकयष्टिका
(२.५.७४२) सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः
(२.५.७४३) आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम्
(२.५.७४४) केयूरमङ्गदं तुल्ये अङ्गुलीयकमूर्मिका
(२.५.७४५) साक्षराङ्गुलिमुद्रा स्यात्कङ्कणं करभूषणम्
(२.५.७४६) स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा
(२.५.७४७) क्लीबे सारसनं चाथ पुंस्कट्यां शृङ्खलं त्रिषु
(२.५.७४८) पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम्
(२.५.७४९) हंसकः पादकटकः किङ्किणी क्षुद्रघण्टिका
(२.५.७५०) त्वक्फलकृमिरोमाणि वस्त्रयोनिर्दश त्रिषु

(२.५.७५१) वाल्कं क्षौमादि फालं तु कार्पासं बादरं च तत्
(२.५.७५२) कौशेयं र्कमिकोशोत्थं राङ्कवं र्मगरोमजम्
(२.५.७५३) अनाहतं निष्प्रवाणि तन्त्रकं च नवाम्बरे
(२.५.७५४) तस्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम्
(२.५.७५५) पत्रोर्णं धौतकौशेयं बहुमूल्यं महाधनम्
(२.५.७५६) क्षौमं दुकूलं स्याद्द्वे तु निवीतं प्रार्वतं त्रिषु
(२.५.७५७) स्त्रियां बहुत्वे वस्त्रस्य दशाः स्युर्वस्तयोर्द्वयोः
(२.५.७५८) दैर्घ्यमायाम आरोहः परिणाहो विशालता
(२.५.७५९) पटच्चरं जीर्णवस्त्रं समौ नक्तककर्पटौ
(२.५.७६०) वस्त्रमाच्छादनं वासश्चैलं वसनमंशुकम्
(२.५.७६१) सुचेलकः पटोऽस्त्री स्याद्वराशिः स्थूलशाटकः
(२.५.७६२) निचोलः प्रच्छदपटः समौ रल्लककम्बलौ
(२.५.७६३) अन्तरीयोपसंव्यानपरिधानान्यधोंशुके
(२.५.७६४) द्वौ प्रावारोत्तरासङ्गौ समौ र्बहतिका तथा
(२.५.७६५) संव्यानमुत्तरीयं च चोलः कूर्पासकोऽस्त्रियाम्
(२.५.७६६) नीशारः स्यात्प्रावरणे हिमाऽनिलनिवारणे
(२.५.७६७) अर्धोरुकं वरस्त्रीणां स्याच्छण्डातकमस्त्रियाम्
(२.५.७६८) स्यात् त्रिष्वाप्रपदीनं तत्प्राप्नोत्याप्रपदं हि यत्
(२.५.७६९) अस्त्री वितानमुल्लोचो दूष्याद्यं वस्त्रवेश्मनि
(२.५.७७०) प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा
(२.५.७७१) परिकर्माङ्गसंस्कारः स्यान्मार्ष्टिर्मार्जना र्मजा
(२.५.७७२) उद्वर्तनोत्सादने द्वे समे आप्लाव आप्लवः
(२.५.७७३) स्नानं चर्चा तु चार्चिक्यं स्थासकोऽथ प्रबोधनम्
(२.५.७७४) अनुबोधः पत्रलेखा पत्राङ्गुलिरिमे समे
(२.५.७७५) तमालपत्रतिलकचित्रकाणि विशेषकम्
(२.५.७७६) द्वितीयं च तुरीयं च न स्त्रियामथ कुङ्कुमम्
(२.५.७७७) काश्मीरजन्माग्निशिखं वरं बाह्लीकपीतने
(२.५.७७८) रक्तसंकोचपिशुनं धीरं लोहितचन्दनम्
(२.५.७७९) लाक्षा राक्षा जतु क्लीबे यावोऽलक्तो द्रुमामयः
(२.५.७८०) लवङ्गं देवकुसुमं श्रीसंज्ञमथ जायकम्
(२.५.७८१) कालीयकं च कालानुसार्यं चाथ समार्थकम्
(२.५.७८२) वंशिकागुरुराजार्हलोहकृमिजजोङ्गकम्
(२.५.७८३) कालागुर्वगुरु स्यात्तु मङ्गल्या मल्लिगन्धि यत्
(२.५.७८४) यक्षधूपः सर्जरसो रालसर्वरसावपि
(२.५.७८५) बहुरूपोऽप्यथ र्वकधूपर्कत्रिमधूपकौ
(२.५.७८६) तुरुष्कः पिण्डकः सिह्लो यावनोऽप्यथ पायसः
(२.५.७८७) श्रीवासो र्वकधूपोऽपि श्रीवेष्टसरलद्रवौ
(२.५.७८८) र्मगनाभिर्मगमदः कस्तूरी चाथ कोलकम्
(२.५.७८९) कङ्कोलकं कोशफलमथ कर्पूरमस्त्रियाम्
(२.५.७९०) तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम्
(२.५.७९१) तिलपर्णी तु पत्राङ्गं रञ्जनं रक्तचन्दनम्
(२.५.७९२) कुचन्दनं चाथ जातीकोशजातीफले समे
(२.५.७९३) कर्पूरागुरुकस्तूरीकक्कोलैर्यक्षकर्दमः
(२.५.७९४) गात्रानुलेपनी वर्तिर्वर्णकं स्याद्विलेपनम्
(२.५.७९५) चूर्णानि वासयोगाः स्युर्भावितं वासितं त्रिषु
(२.५.७९६) संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनम्
(२.५.७९७) माल्यं मालास्रजौ मूर्ध्नि केशमध्ये तु गर्भकः
(२.५.७९८) प्रभ्रष्टकं शिखालम्बि पुरोन्यस्तं ललामकम्
(२.५.७९९) प्रालम्बमृजुलम्बि स्यात्कण्ठाद्वैकक्षिकं तु तत्
(२.५.८००) यत्तिर्यक् क्षिप्तमुरसि शिखास्वापीडशेखरौ
(२.५.८०१) रचना स्यात्परिस्यन्द आभोगः परिपूर्णता
(२.५.८०२) उपधानं तूपबर्हः शय्यायां शयनीयवत्
(२.५.८०३) शयनं मञ्चपर्यङ्कपल्यङ्काः खट्व्या समाः
(२.५.८०४) गेन्दुकः कन्दुको दीपः प्रदीपः पीठमासनम्
(२.५.८०५) समुद्गकः संपुटकः प्रतिग्राहः पतद्ग्रहः
(२.५.८०६) प्रसाधनी कङ्कतिका पिष्टातः पटवासकः
(२.५.८०७) दर्पणे मुकुरादर्शौ व्यजनं तालर्वन्तकम् ।इति मनुष्यवर्गः
(२.६.८०८) संततिर्गोत्रजननकुलान्यभिजनान्वयौ ।अथ ब्रह्मवर्गः
(२.६.८०९) वंशोऽन्ववायः संतानो वर्णाः स्युर्ब्राह्मणादयः
(२.६.८१०) विप्रक्षत्रियविट् शूद्राश्चातुर्वर्ण्यमिति र्स्मतम्
(२.६.८११) राजबीजी राजवंश्यो बीज्यस्तु कुलसंभवः
(२.६.८१२) महाकुलकुलीनार्यसभ्यसज्जनसाधवः
(२.६.८१३) ब्रह्मचारी र्गही वानप्रस्थो भिक्षुश्चतुष्टये
(२.६.८१४) आश्रमोऽस्त्री द्विजात्यग्रजन्मभूदेववाडवाः
(२.६.८१५) विप्रश्च ब्राह्मणोऽसौ षट्कर्मा यागादिभिर्वृतः
(२.६.८१६) विद्वान्विपश्चिद्दोषज्ञः सन्सुधीः कोविदो बुधः
(२.६.८१७) धीरो मनीषी ज्ञः प्राज्ञः संख्यावान्पण्डितः कविः
(२.६.८१८) धीमान्सूरिः र्कती र्कष्टिर्लब्धवर्णो विचक्षणः
(२.६.८१९) दूरदर्शी दीर्घदर्शी श्रोत्रियच्छान्दसौ समौ
(२.६.८२०) मीमांसको जैमिनीये वेदान्ती ब्रह्मवादिनि
(२.६.८२१) वैशेषिके स्यादौलूक्यः सौगतः शून्यवादिनि
(२.६.८२२) नैयायिकस्त्वक्षपादः स्यात्स्याद्वादिक आर्हकः
(२.६.८२३) चार्वाकलौकायतिकौ सत्कार्ये सांख्यकापिलौ
(२.६.८२४) उपाध्यायोऽध्यापकोऽथ स्यान्निषेकादिर्कद्गुरुः
(२.६.८२५) मन्त्रव्याख्यार्कदाचार्य आदेष्टा त्वध्वरे व्रती
(२.६.८२६) यष्टा च यजमानश्च स सोमवति दीक्षितः
(२.६.८२७) इज्याशीलो यायजूको यज्वा तु विधिनेष्टवान्
(२.६.८२८) स गीर्पतीष्टया स्थपतिः सोमपीथी तु सोमपाः
(२.६.८२९) सर्ववेदाः स येनेष्टो यागः सर्वस्वदक्षिणः
(२.६.८३०) अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु यः
(२.६.८३१) लब्धानुज्ञः समार्वत्तः सुत्वा त्वभिषवे र्कते
(२.६.८३२) छात्रान्तेवासिनौ शिष्ये शैक्षाः प्राथमकल्पिकाः
(२.६.८३३) एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः
(२.६.८३४) सतीर्थ्यास्त्वेकगुरवश्चितवानग्निमग्निचित्
(२.६.८३५) पारम्पर्योपदेशे स्यादैतिह्यमितिहाव्ययम्
(२.६.८३६) उपज्ञा ज्ञानमाद्यं स्याज्ज्ञात्वारम्भ उपक्रमः

(२.६.८३७) यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः
(२.६.८३८) पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः
(२.६.८३९) एते पञ्चमहायज्ञा ब्रह्मयज्ञादिनामकाः
(२.६.८४०) समज्या परिषद्गोष्ठी सभासमितिसंसदः
(२.६.८४१) आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः
(२.६.८४२) प्राग्वंशः प्राग् हविर्गेहात्सदस्या विधिदर्शिनः
(२.६.८४३) सभासदः सभास्ताराः सभ्याः सामाजिकाश्च ते
(२.६.८४४) अध्वर्यूद्गातृहोतारो यजुःसामर्ग्विदः क्रमात्
(२.६.८४५) आग्नीध्राद्या धनैर्वार्या ऋत्विजो याजकाश्च ते
(२.६.८४६) वेदिः परिष्कृता भुमिः समे स्थण्डिलचत्वरे
(२.६.८४७) चषालो यूपकटकः कुम्बा सुगहना वृतिः
(२.६.८४८) यूपाग्रं तर्म निर्मन्थ्यदारुणि त्वरणिर्द्वयोः
(२.६.८४९) दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः
(२.६.८५०) अग्नित्रयमिदं त्रेता प्रणीतः संस्कृतोऽनलः
(२.६.८५१) समूह्यः परिचाय्योपचाय्यावग्नौ प्रयोगिणः
(२.६.८५२) यो गार्हपत्यादानीय दक्षिणाग्निः प्रणीयते
(२.६.८५३) तस्मिन्नानाय्योऽथाग्नायी स्वाहा च हुतभुक्प्रिया
(२.६.८५४) ऋक्सामिधेनी धाय्या च या स्यादग्निसमिन्धने
(२.६.८५५) गायत्रीप्रमुखं छन्दो हव्यपाके चरुः पुमान्
(२.६.८५६) आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः
(२.६.८५७) धवित्रं व्यजनं तद्यद्रचितं मृगचर्मणा
(२.६.८५८) पृषदाज्यं सदध्याज्ये परमान्नं तु पायसम्
(२.६.८५९) हव्यकव्ये दैवपित्र्ये अन्ने पात्रं स्रुवादिकम्
(२.६.८६०) ध्रुवोपभृज्जुहूर्ना तु स्रुवो भेदाः स्रुचः स्त्रियः
(२.६.८६१) उपाकृतः पशुरसौ योऽभिमन्त्र्य क्रतौ हतः
(२.६.८६२) परम्पराकम् शमनं प्रोक्षणं च वधार्थकम्
(२.६.८६३) वाच्यलिङ्गाः प्रमीतोपसंपन्नप्रोक्षिता हते
(२.६.८६४) सांनाय्यं हविरग्नौ तु हुतं त्रिषु वषट् कृतम्
(२.६.८६५) दीक्षान्तोऽवभृतो यज्ञे तत्कर्मार्हं तु यज्ञियम्
(२.६.८६६) त्रिष्वथ क्रतुकर्मेष्टं पूर्तं खातादि कर्म यत्
(२.६.८६७) अमृतं विघसो यज्ञशेषभोजनशेषयोः
(२.६.८६८) त्यागो विहापितं दानमुत्सर्जनविसर्जने
(२.६.८६९) विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्
(२.६.८७०) प्रादेशनं निर्वपणमपवर्जनमंहतिः
(२.६.८७१) मृतार्थं तदहे दानं त्रिषु स्यादौर्ध्वदेहिकम्
(२.६.८७२) पितृदानं निवापः स्याच्छ्राद्धं तत्कर्म शस्त्रतः
(२.६.८७३) अन्वाहार्यं मासिकेंऽशोऽष्टमोऽह्नः कुतपोऽस्त्रियाम्
(२.६.८७४) पर्येषणा परीष्टिश्चान्वेषणा च गवेषणा
(२.६.८७५) सनिस्त्वध्येषणा याञ्चाऽभिशस्तिर्याचनार्थना
(२.६.८७६) षट्तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय वारिणि
(२.६.८७७) क्रमादातिथ्यातिथेये अतिथ्यर्थेऽत्र साधुनि
(२.६.८७८) स्युरावेशिक आगन्तुरतिथिर्ना गृहागते
(२.६.८७९) प्राघूर्णिकः प्राघूणकश्चाभ्युत्थानं तु गौरवम्
(२.६.८८०) पूजा नमस्यापचितिः सपर्यार्चार्हणाः समाः
(२.६.८८१) वरिवस्या तु शुश्रूषा परिचर्याप्युपासना
(२.६.८८२) व्रज्याटाट्या पर्यटनं चर्या त्वीर्यापथे स्थितिः
(२.६.८८३) उपस्पर्शस्त्वाचमनमथ मौनमभाषणम्
(२.६.८८४) प्राचेतसश्चाअदिकविः स्यान्मैत्रावरुणिश्च सः
(२.६.८८५) वाल्मीकश्चाथ गाधेयो विश्वामित्रश्च कौशिकः
(२.६.८८६) व्यासो द्वैपायनः पाराशर्यः सत्यवतीसुतः
(२.६.८८७) आनुपूर्वी स्त्रियां वावृत्परिपाठी अनुक्रमः
(२.६.८८८) पर्यायश्चातिपातस्तु स्यात्पर्यय उपात्ययः
(२.६.८८९) नियमो व्रतमस्त्री तच्चोपवासादि पुण्यकम्
(२.६.८९०) औपवस्तं तूपवासः विवेकः पृथगात्मता
(२.६.८९१) स्याद्ब्रह्मवर्चसं वृत्ताध्ययनर्द्धिरथाञ्जलिः
(२.६.८९२) पाठे ब्रह्माञ्जलिः पाठे विप्रुषो ब्रह्मबिन्दवः
(२.६.८९३) ध्यानयोगासने ब्रह्मासनं कल्पे विधिक्रमौ
(२.६.८९४) मुख्यः स्यात्प्रथमः कल्पोऽनुकल्पस्तु ततोऽधमः
(२.६.८९५) संस्कारपूर्वं ग्रहणं स्यादुपाकरणं श्रुतेः
(२.६.८९६) समे तु पादग्रहणमभिवादनमित्युभे
(२.६.८९७) भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी
(२.६.८९८) तपस्वी तापसः पारिकाङ्क्षी वाचंयमो मुनिः
(२.६.८९९) तपःक्लेशसहो दान्तो वर्णिनो ब्रह्मचारिणः
(२.६.९००) ऋषयः सत्यवचसः स्नातकस्त्वाप्लुतो व्रती
(२.६.९०१) ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते
(२.६.९०२) यः स्थण्डिले व्रतवशाच्छेते स्थण्डिलशाय्यसौ
(२.६.९०३) स्थाण्डिलश्चाथ विरजस्तमसः स्युर्द्वयातिगाः
(२.६.९०४) पवित्रः प्रयतः पूतः पाषण्डाः सर्वलिङ्गिनः
(२.६.९०५) पालाशो दण्ड आषाढो व्रते राम्भस्तु वैणवः
(२.६.९०६) अस्त्री कमण्डलुः कुण्डी व्रतिनामासनं बृषी
(२.६.९०७) अजिनं चर्म कृत्तिः स्त्री भैक्षं भिक्षाकदम्बकम्
(२.६.९०८) स्वाध्यायः स्याज्जपः सुत्याभिषवः सवनं च सा
(२.६.९०९) सर्वैनसामपध्वंसि जप्यं त्रिष्वघमर्षणम्
(२.६.९१०) दर्शश्च पौर्णमासश्च यागौ पक्षान्तयोः पृथक्
(२.६.९११) शरीरसाधनापेक्षं नित्यं यत्कर्म तद्यमः
(२.६.९१२) नियमस्तु स यत्कर्म नित्यमागन्तुसाधनम्
(२.६.९१३) क्षौरम् तु भद्राकरणं मुण्डनं वपनं त्रिषु
(२.६.९१४) कक्षापटी च कौपीनं शाटी च स्त्रीति लक्ष्यतः
(२.६.९१५) उपवीतं ब्रह्मसूत्रं प्रोद्धृते दक्षिणे करे
(२.६.९१६) प्राचीनावीतमन्यस्मिन्निवीतं कण्ठलम्बितम्
(२.६.९१७) अङ्गुल्यग्रे तीर्थं दैवं स्वल्पाङ्गुल्योर्मूले कायम्
(२.६.९१८) मध्येऽङ्गुष्ठाङ्गुल्योः पित्र्यं मूले त्वङ्गुष्ठस्य ब्राह्मम्
(२.६.९१९) स्याद्ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि
(२.६.९२०) देवभूयादिकं तद्वत्कृच्छ्रं सान्तपनादिकम्
(२.६.९२१) संन्यासवत्यनशने पुमान्प्रायोऽथ वीरहा
(२.६.९२२) नष्टाग्निः कुहना लोभान्मिथ्येर्यापथकल्पना

(२.६.९२३) व्रात्यः संस्कारहीनः स्यादस्वाध्यायो निराकृतिः
(२.६.९२४) धर्मध्वजी लिङ्गवृत्तिरवकीर्णी क्षतव्रतः
(२.६.९२५) सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च
(२.६.९२६) अंशुमानभिनिर्मुक्ताभ्युदितौ च यथाक्रमम्
(२.६.९२७) परिवेत्तानुजोऽनूढे ज्येष्ठे दारपरिग्रहात्
(२.६.९२८) परिवित्तिस्तु तज्जायान्विवाहोपयमौ समौ
(२.६.९२९) तथा परिणयोद्वाहोपयामाः पाणिपीडनम्
(२.६.९३०) व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम्
(२.६.९३१) त्रिवर्गोधर्मकामार्थैश्चतुर्वर्गः समोक्षकैः
(२.६.९३२) सबलैस्तैश्चतुर्भद्रं जन्याः स्निग्धाः वरस्य ये ।इति ब्रह्मवर्गः
(२.७.९३३) मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट् ।अथ क्षत्रियवर्गः
(२.७.९३४) राजा राट् पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः
(२.७.९३५) राजा तु प्रणताशेषसामन्तः स्यादधीश्वरः
(२.७.९३६) चक्रवर्ती सार्वभौमो नृपोऽन्यो मण्डलेश्वरः
(२.७.९३७) येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः
(२.७.९३८) शास्ति यश्चाज्ञया राज्ञः स सम्राडथ राजकम्
(२.७.९३९) राजन्यकं च नृपतिक्षत्रियाणां गणे क्रमात्
(२.७.९४०) मन्त्री धीसचिवोऽमात्योऽन्ये कर्मसचिवास्ततः
(२.७.९४१) महामात्रा प्रधानानि पुरोधास्तु पुरोहितः
(२.७.९४२) द्रष्टरि व्यवहाराणां प्राड्विवाकाक्षदर्शकौ
(२.७.९४३) प्रतीहारो द्वारपालद्वास्थद्वास्थितदर्शकाः
(२.७.९४४) रक्षिवर्गस्त्वनीकस्थोऽथाध्यक्षाधिकृतौ समौ
(२.७.९४५) स्थायुकोऽधिकृतो ग्रामे गोपो ग्रामेषु भूरिषु
(२.७.९४६) भौरिकः कनकाध्यक्षो रूप्याध्यक्षस्तु नैष्किकः
(२.७.९४७) अन्तःपुरे त्वधिकृतः स्यादन्तर्वंशिको जनः
(२.७.९४८) सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते
(२.७.९४९) शण्ढो वर्षवरस्तुल्यौ सेवकार्थ्यनुजीविनः
(२.७.९५०) विषयानन्तरो राजा शत्रुर्मित्रमतः परम्
(२.७.९५१) उदासीनः परतरः पार्ष्णिग्राहस्तु पृष्ठतः
(२.७.९५२) रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः
(२.७.९५३) द्विड् विपक्षाहितामित्रदस्युशात्रवशत्रवः
(२.७.९५४) अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः
(२.७.९५५) वयस्यः स्निग्धः सवया अथ मित्रं सखा सुहृत्
(२.७.९५६) सख्यं साप्तपदीनं स्यादनुरोधोऽनुवर्तनम्
(२.७.९५७) यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः
(२.७.९५८) चारश्च गूढपुरुषश्चाप्तप्रत्ययितौ समौ
(२.७.९५९) सांवत्सरो ज्यौतिषिको दैवज्ञगणकावपि
(२.७.९६०) स्युर्मौहूर्तिकमौहूर्तज्ञानिकार्तान्तिका अपि
(२.७.९६१) तान्त्रिको ज्ञातसिद्धान्तः सत्री गृहपतिः समौ
(२.७.९६२) लिपिकारोऽक्षरचणोऽक्षरचुञ्चुश्च लेखके
(२.७.९६३) लिखिताक्षरविन्यासे (संस्थाने) लिपिर्लिब(भ)इरुभे स्त्रियौ
(२.७.९६४) स्यात्संदेशहरो दूतो दूत्यं तद्भावकर्मणी
(२.७.९६५) अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि
(२.७.९६६) स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च
(२.७.९६७) राज्याङ्गानि प्रकृतयः पौराणां श्रेनयोऽपि च
(२.७.९६८) संधिर्ना विग्रहो यानमासनं द्वैधमाश्रयः
(२.७.९६९) षड्गुणाः शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः
(२.७.९७०) क्षयः स्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम्
(२.७.९७१) स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम्
(२.७.९७२) भेदो दण्डः साम दानमित्युपायचतुष्टयम्
(२.७.९७३) साहसं तु समो (दमो) दण्डः साम सान्त्वमथो समौ
(२.७.९७४) भेदोपजापावुपधा धर्माद्यैर्यत्परीक्षणम्
(२.७.९७५) पञ्च त्रिष्वषडक्षीणो यस्तृतीयाद्यगोचरः
(२.७.९७६) विविक्तविजनच्छन्ननिःशलाकास्तथा रहः
(२.७.९७७) रहश्चोपांशु चालिङ्गे रहस्यं तद्भवे त्रिषु
(२.७.९७८) समौ विस्रम्भविश्वासौ भ्रेषो भ्रंशो यथोचितात्
(२.७.९७९) अभ्रेषान्यायकल्पास्तु देशरूपं समञ्जसम्
(२.७.९८०) युक्तमौपयिकं लभ्यं भजमानाभिनीतवत्
(२.७.९८१) न्याय्यं च त्रिषु षट् संप्रधारणा तु समर्थनम्
(२.७.९८२) अववादस्तु निर्देशो निदेशः शासनं च सः
(२.७.९८३) शिष्टिश्चाज्ञा च संस्था तु मर्यादा धारणा स्थितिः
(२.७.९८४) सुधरणा सुधारा स्त्री सुस्थितिः सुदशोन्नतिः
(२.७.९८५) आगोऽपराधो मन्तुश्च समे तूद्दानबन्धने
(२.७.९८६) द्विपाद्यो द्विगुणो दण्डो भागधेयः करो बलिः
(२.७.९८७) घट्टादिदेयं शुल्कोऽस्त्री प्राभृतं तु प्रदेशनम्
(२.७.९८८) उपायनमुपग्राह्यमुपहारस्तथोपदा
(२.७.९८९) यौतकादि तु यद्देयं सुदायो हरणं च तत्
(२.७.९९०) तत्कालस्तु तदात्वं स्यादुत्तरः काल आयतिः
(२.७.९९१) सांदृष्टिकं फलं सद्यः उदर्कः फलमुत्तरम्
(२.७.९९२) अदृष्टं वह्नितोयादि दृष्टं स्वपरचक्रजम्
(२.७.९९३) महीभुजामहिभयं स्वपक्षप्रभवं भयम्
(२.७.९९४) प्रक्रिया त्वधिकारः स्याच्चामरं तु प्रकीर्णकम्
(२.७.९९५) नृपासनं यत्तद्भद्रासनं सिंहासनं तु तत्
(२.७.९९६) हैमं छत्रं त्वातपत्रं राज्ञस्तु नृपलक्ष्म तत्
(२.७.९९७) भद्रकुम्भः पूर्णकुम्भो भृङ्गारः कनकालुका
(२.७.९९८) निवेशः शिबिरं षण्ढे सज्जनं तूपरक्षणम्
(२.७.९९९) हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम्
(२.७.१०००) दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः
(२.७.१००१) मतङ्गजो गजो नागः कुञ्जरो वारणः करी
(२.७.१००२) इभः स्तम्बेरभः पद्मी यूथनाथस्तु यूथपः
(२.७.१००३) मदोत्कटो मदकलः कलभः करिशावकः
(२.७.१००४) प्रभिन्नो गर्जितो मत्तः समावुद्वान्तनिर्मदौ
(२.७.१००५) हास्तिकं गजता वृन्दे करिणी धेनुका वशा
(२.७.१००६) गण्डः कटो मदो दानं वमथुः करशीकरः
(२.७.१००७) कुम्भौ तु पिण्डौ शिरसस्तयोर्मध्ये विदुः पुमान्
(२.७.१००८) अवग्रहो ललाटं स्यादीषिका त्वक्षिकूटकम्

(२.७.१००९) अपाङ्गदेशो निर्याणं कर्णमूलं तु चूलिका
(२.७.१०१०) अधः कुम्भस्य वाहित्थं प्रतिमानमधोऽस्य यत्
(२.७.१०११) आसनं स्कन्धदेशः स्यात्पद्मकं बिन्दुजालकम्
(२.७.१०१२) पार्श्वभागः पक्षभागो दन्तभागस्तु योऽग्रतः
(२.७.१०१३) द्वौ पूर्वपश्चाज्जङ्घादिदेशौ गात्रावरे क्रमात्
(२.७.१०१४) तोत्रं वेणुकमालानं बन्धस्तम्भेऽथ शृङ्खले
(२.७.१०१५) अन्दुको निगडोऽस्त्री स्यादङ्कुशोऽस्त्री सृणिः स्त्रियाम्
(२.७.१०१६) दूष्या (चूषा) कक्ष्या वरत्रा स्यात्कल्पना सज्जना समे
(२.७.१०१७) प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः
(२.७.१०१८) वीतं त्वसारं हस्त्यश्वं वारी तु गजबन्धनी
(२.७.१०१९) घोटके वीति (पीति)तुरगतुरङ्गाश्वतुरङ्गमाः
(२.७.१०२०) वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः
(२.७.१०२१) आजानेयाः कुलीनाः स्युर्विनीताः साधुवाहिनः
(२.७.१०२२) वनायुजाः पारसीकाः काम्बोजाः बाह्लिका हयाः
(२.७.१०२३) ययुरश्वोऽश्वमेधीयो जवनस्तु जवाधिकः
(२.७.१०२४) पृष्ठ्यः स्थौरी सितः कर्को रथ्यो वोढा रथस्य यः
(२.७.१०२५) बालः किशोरो वाम्यश्वा वडवा वाडवं गणे
(२.७.१०२६) त्रिष्वाश्वीनं यदश्वेन दिनेनैकेन गम्यते
(२.७.१०२७) कश्यं तु मध्यमश्वानां हेषा ह्रेषा च निस्वनः
(२.७.१०२८) निगालस्तु गलोद्देशो वृन्दे त्वश्वीयमाश्ववत्
(२.७.१०२९) आस्कन्दितं धौरितकं रेचितम् वल्गितं प्लुतम्
(२.७.१०३०) गतयोऽमूः पञ्च धारा घोणा तु प्रोथमस्त्रियाम्
(२.७.१०३१) कविका तु खलीनोऽस्त्री शफं क्लीबे खुरः पुमान्
(२.७.१०३२) पुच्छोऽस्त्री लूमलाङ्गूले वालहस्तश्च वालधिः
(२.७.१०३३) त्रिषूपावृत्तलुठितौ परावृत्ते मुहुर्भुवि
(२.७.१०३४) याने चक्रिणि युद्धार्थे शताङ्गः स्यन्दनो रथः
(२.७.१०३५) असौ पुष्परथश्चक्रयानं न समराय यत्
(२.७.१०३६) कर्णीरथः प्रवहणं डयनं च समं त्रयम्
(२.७.१०३७) क्लीबेऽनः शकटोऽस्त्री स्याद्गन्त्री कम्बलिवाह्यकम्
(२.७.१०३८) शिबिका याप्ययानं स्याद्दोला प्रेङ्खाअदिकाः स्त्रियाम्
(२.७.१०३९) उभौ तु द्वैपवैयाघ्रौ द्वीपिचर्मावृते रथे
(२.७.१०४०) पाण्डुकम्बलसंवीतः स्यन्दनः पाण्डुकम्बली
(२.७.१०४१) रथे काम्बलवास्त्राद्याः कम्बलादिभिरावृते
(२.७.१०४२) त्रिषु द्वैपादयो रथ्या रथकड्या रथव्रजे
(२.७.१०४३) धूः स्त्री क्लीबे यानमुखं स्याद्रथाङ्गमपस्करः
(२.७.१०४४) चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात्प्रधिः पुमान्
(२.७.१०४५) पिण्डिका नाभिरक्षाग्रकीलके तु द्वयोरणिः
(२.७.१०४६) रथगुप्तिर्वरूथो ना कूबरस्तु युगंधरः
(२.७.१०४७) अनुकर्षो दार्वधःस्थं प्रासङ्गो ना युगाद्युगः
(२.७.१०४८) सर्वं स्याद्वाहनं यानं युग्यं पत्रं च धोरणम्
(२.७.१०४९) परम्परावाहनं यत्तद्वैनीतकमस्त्रियाम्
(२.७.१०५०) आधोरणा हस्तिपका हस्त्यारोहा निषादिनः
(२.७.१०५१) नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः
(२.७.१०५२) सव्येष्ठदक्षिणस्थौ च संज्ञा रथकुटुम्बिनः
(२.७.१०५३) रथिनः स्यन्दनारोहा अश्वारोहास्तु सादिनः
(२.७.१०५४) भटा योधाश्च योद्धारः सेनारक्षास्तु सैनिकाः
(२.७.१०५५) सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते
(२.७.१०५६) बलिनो ये सहस्रेण साहस्रास्ते सहस्रिणः
(२.७.१०५७) परिधिस्थः परिचरः सेनानीर्वाहिनीपतिः
(२.७.१०५८) कञ्चुको वारबाणोऽस्त्री यत्तु मध्ये सकञ्चुकाः
(२.७.१०५९) बध्नन्ति तत्सारसनमधिकाङ्गोऽथ शीर्षकम्
(२.७.१०६०) शीर्षण्यं च शिरस्त्रेऽथ तनुत्रं वर्म दंशनम्
(२.७.१०६१) उरश्छदः कङ्कटको जागरः कवचोऽस्त्रियाम्
(२.७.१०६२) आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत्
(२.७.१०६३) संनद्धो वर्मितः सज्जो दंशितो व्युढकङ्कटः
(२.७.१०६४) त्रिष्वामुक्तादयो वर्मभृतां कावचिकं गणे
(२.७.१०६५) पदातिपत्तिपदगपादातिकपदातयः
(२.७.१०६६) पद्गश्च पदिकश्चाथ पादातं पत्तिसंहतिः
(२.७.१०६७) शस्त्राजीवे काण्डपृष्ठायुधीयायुधिकाः समाः
(२.७.१०६८) कृतहस्तः सुप्रयोगविशिखः कृतपुङ्खवत्
(२.७.१०६९) अपराद्धपृषत्कोऽसौ लक्ष्याद्यश्च्युतसायकः
(२.७.१०७०) धन्वी धनुष्मान्धानुष्को निषङ्ग्यस्त्री धनुर्धरः
(२.७.१०७१) स्यात्काण्डवांस्तु काण्डीरः शाक्तीकः शक्तिहेतिकः
(२.७.१०७२) याष्टीकपारश्वथिकौ यष्टिपर्श्वधहेतिकौ
(२.७.१०७३) नैस्त्रिंशिकोऽसिहेतिः स्यात्समौ प्रासिककौन्तिकौ
(२.७.१०७४) चर्मी फलकपाणिः स्यात्पताकी वैजयन्तिकः
(२.७.१०७५) अनुप्लवः सहायश्चाऽनुचरोऽनुचरोऽभिचरः समाः
(२.७.१०७६) पुरोगाऽग्रेसरप्रष्ठाऽग्रतःसरपुरःसराः
(२.७.१०७७) पुरोगमः पुरोगामी मन्दगामी तु मन्थरः
(२.७.१०७८) जङ्घालोऽतिजवस्तुल्यौ जङ्घाकरिकजाङ्घिकौ
(२.७.१०७९) तरस्वी त्वरितो वेगी प्रजस्वी जवनो जवः
(२.७.१०८०) जय्यो यः शक्यते जेतुं जेयो जेतव्यमात्रके
(२.७.१०८१) जैत्रस्तु जेता यो गच्छत्यलं विद्विषतः प्रति
(२.७.१०८२) सोऽभ्यमित्रोऽभ्यमित्रीयोऽप्यभ्यमित्रीण इत्यपि
(२.७.१०८३) ऊर्जस्वलः स्यादूर्जस्वी य ऊर्जोऽतिशयान्वितः
(२.७.१०८४) स्वादुरस्वानुरसिलो रथिको रथिरो रथी
(२.७.१०८५) कामगाम्यनुकामीनो ह्यत्यन्तीनस्तथा भृशम्
(२.७.१०८६) शूरो वीरश्च विक्रान्तो जेता जिष्णुश्च जित्वरः
(२.७.१०८७) सांयुगीनो रणे साधुः शस्त्रजीवाऽऽदयस्त्रिषु
(२.७.१०८८) ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमूः
(२.७.१०८९) वरूथिनी बलं सैन्यं चक्रं चाऽनीकमस्त्रियाम्
(२.७.१०९०) व्यूहस्तु बलविन्यासो भेदादण्डाऽऽदयो युधि
(२.७.१०९१) प्रत्यासारो व्यूहपार्ष्णिः सैन्यपृष्ठे प्रतिग्रहः
(२.७.१०९२) एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका
(२.७.१०९३) पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम्
(२.७.१०९४) सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः

(२.७.१०९५) अनीकिनी दशाऽनीकिन्यक्षौहिण्यथ संपदि
(२.७.१०९६) संपत्तिः श्रीश्च लक्ष्मीश्च विपत्त्यां विपदापदौ
(२.७.१०९७) आयुधं तु प्रहरणं शस्त्रमस्त्रमथाऽस्त्रियौ
(२.७.१०९८) धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्
(२.७.१०९९) इष्वासोऽप्यथ कर्णस्य कालपृष्ठं शरासनम्
(२.७.११००) कपिध्वजस्य गाण्डीवगाण्डिवौ पुंनपुंसकौ
(२.७.११०१) कोटिरस्याऽटनी गोधातले ज्याघातवारणे
(२.७.११०२) लस्तकस्तु धनुर्मध्यं मोर्वी ज्या शिञ्जिनी गुणः
(२.७.११०३) स्यात्प्रत्यालीढमालीढमित्यादि स्थानपञ्चकम्
(२.७.११०४) लक्ष्यं लक्षं शरव्यं च शराभ्यास उपासनम्
(२.७.११०५) र्पृषत्कबाणविशिखा अजिह्मगखगाऽऽशुगाः
(२.७.११०६) कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः
(२.७.११०७) प्रक्ष्वेडनास्तु नाराचाः पक्षो वाजस्त्रिषूत्तरे
(२.७.११०८) निरस्तः प्रहिते बाणे विषाऽक्ते दिग्धलिप्तकौ
(२.७.११०९) तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः
(२.७.१११०) तूण्यां खड्गे तु निस्त्रिंशचन्द्रहासाऽसिरिष्टयः
(२.७.११११) कौक्षेयको मण्डलाग्रः करवालः र्कृपाणवत्
(२.७.१११२) त्सरुः खड्गादिमुष्टौ स्यान्मेखला तन्निबन्धनम्
(२.७.१११३) फलकोऽस्त्री फलं चर्म संग्राहो मुष्टिरस्य यः
(२.७.१११४) द्रुघणो मुद्गरघनौ स्यादीली करवालिका
(२.७.१११५) भिन्दिपालः र्सृगस्तुल्यौ परिघः परिघातिनः
(२.७.१११६) द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः
(२.७.१११७) स्याच्छुस्त्री चाऽसिपुत्री च छुरिका चाऽसिधेनुका
(२.७.१११८) वा पुंसि शल्यं शङ्कुर्ना सर्वला तोमरोऽस्त्रियाम्
(२.७.१११९) प्रासस्तु कुन्तः कोणस्तु स्त्रियः पाल्यश्रिकोटयः
(२.७.११२०) सर्वाभिसारः सर्वौघः सर्वसन्नहनार्थकः
(२.७.११२१) लोहाभिसारोऽस्त्रर्भृतां राज्ञानां नीराजनाविधिः
(२.७.११२२) यत्सेनयाऽभिगमनमरौ तदभिषेणनम्
(२.७.११२३) यात्रा व्रज्याऽभिनिर्याणं प्रस्थानं गमनं गमः
(२.७.११२४) स्यादासारः प्रसरणं प्रचक्रं चलितार्थकम्
(२.७.११२५) अहितान्प्रत्यभीतस्य रणे यानमभिक्रमः
(२.७.११२६) वैतालिका बोधकराश्चाक्रिका घाण्टिकार्थकाः
(२.७.११२७) स्युर्मागधास्तु मगधा बन्दिनः स्तुतिपाठकाः
(२.७.११२८) संशप्तकास्तु समयात् संग्रामादनिवर्तिनः
(२.७.११२९) रेणुर्द्वयोः स्त्रियां धूलिः पांसुर्ना न द्वयो रजः
(२.७.११३०) चूर्णे क्षोदः समुत्पिञ्जपिञ्जलौ र्भृशमाकुले
(२.७.११३१) पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम्
(२.७.११३२) सा वीराशंसनं युद्धभूमिर्याऽतिभयप्रदा
(२.७.११३३) अहं पूर्वमहं पूर्वमित्यहंपूर्विका स्त्रियाम्
(२.७.११३४) आहोपुरुषिका दर्पाद्या स्यात्संभावनाऽऽत्मनि
(२.७.११३५) अहमहमिका तु सा स्यात् परस्परं यो भवत्यहङ्कारः
(२.७.११३६) द्रविणं तरः सहोबलशौर्याणि स्थाम शुष्मं च
(२.७.११३७) शक्तिः पराक्रमः प्राणो विक्रमस्त्वतिशक्तिता
(२.७.११३८) वीरपाणं तु यत्पानं र्वृत्ते भाविनि वा रणे
(२.७.११३९) युद्धमायोधनं जन्यं प्रघनं प्रविदारणम्
(२.७.११४०) र्मृधमास्कन्दनं संख्यं समीकं सांपरायिकम्
(२.७.११४१) अस्त्रियां समराऽनीकरणाः कलहविग्रहौ
(२.७.११४२) संप्रहाराऽभिसंपात कलिसंस्फोट संयुगाः
(२.७.११४३) अभ्यामर्द समाघआत संग्रामाऽभ्यागमाऽऽहवाः
(२.७.११४४) समुदायः स्त्रियः संयत्समित्याऽऽजिसमिद्युधः
(२.७.११४५) नियुद्धं बाहुयुद्धेऽथ तुमुलं रणसंकुले
(२.७.११४६) क्ष्वेदा तु सिंहनादः स्यात् करिणां घटना घटा
(२.७.११४७) क्रंदनं योधसंरावो र्बृंहितं करिगर्जितम्
(२.७.११४८) विस्फारो धनुषः स्वानः पताहाऽऽदम्बरओ समौ
(२.७.११४९) प्रसभं तु बलात्कारो हठोऽथ स्खलितं छलम्
(२.७.११५०) अजन्यं क्लीबमुत्पात उपसर्गः समं त्रयम्
(२.७.११५१) मूर्छा तु कश्मलं मोहोऽप्यवमर्दस् तु पीदनम्
(२.७.११५२) अभ्यवस्कन्दनं त्वभ्यासादनं विजयो जयः
(२.७.११५३) वैरशुद्धिः प्रतीकारो वैरनिर्यआतनं च सा
(२.७.११५४) प्रद्रावोद्द्रावसंद्राव संदावा विद्रवो द्रवः
(२.७.११५५) अपक्रमोऽपयानं च रणे भंगः पराजयः
(२.७.११५६) पराजितपराभूतौ त्रिषु नष्टतिरोहितौ
(२.७.११५७) प्रमापणं निबर्हणं निकारणं विशारणम्
(२.७.११५८) प्रवासनं परासनं निषूदनं निहिंसनम्
(२.७.११५९) निर्वासनं संज्ञपनं निर्गन्थनमपासनम्
(२.७.११६०) निस्तर्हणं निहननं क्षणनं परिवर्जनम्
(२.७.११६१) निर्वापणं विशसनं मारणं प्रतिघातनम्
(२.७.११६२) उद्वासन प्रमथन क्रथनोज्जासनानि च
(२.७.११६३) आलम्भपिञ्जविशरघातोन्माथवधा अपि
(२.७.११६४) स्यात् पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः
(२.७.११६५) अन्तो नाशो द्वयोर् मृत्युर् मरणं निधनोऽस्त्रियाम्
(२.७.११६६) परासुप्राप्तपंचत्वपरेतप्रेतसंस्थिताः
(२.७.११६७) मृतप्रमीतौ त्रिष्वेते, चिता चित्या चितिः स्त्रियाम्
(२.७.११६८) कबंधोऽस्त्री क्रिया युक्तमपमूर्धकलेवरम्
(२.७.११६९) श्मशानं स्यात् पितृवनं कुणपः शवमस्त्रियाम्
(२.७.११७०) प्रग्रहोपग्रहौ बंद्यां, कारा स्यात् बंधनालये
(२.७.११७१) पूंसि भूग्न्यसवः प्राणाश् चैवं, जीवोऽसुधारणम्
(२.७.११७२) आयुर् जीवितकालो, ना जीवतुर् जीवनौषधम् ।इति क्षत्रि
वैश्यवर्गः।

(२.८.११७३) ऊरव्य ऊरुज अर्या वैश्या भूमिस्पृशो विशः ।अथ वैश्यवर्ग
(२.८.११७४) आजीवो जीविका वार्ता वृत्तिर् वर्तनजीवने
(२.८.११७५) स्त्रियां कृषिः पाशुपाल्यं वाणिज्यं चेति वृत्तयः
(२.८.११७६) सेवा श्ववृत्तिरनृतं कृशिरुञ्छशिलं त्वृतम्
(२.८.११७७) द्वे याचिताऽयाचितयोर् यथासंख्यं मृताऽमृते
(२.८.११७८) सत्यानृतं वणिग्भावः, स्यादृणं पर्युदञ्चनम्

(२.८.११७९) उद्धारोऽर्थप्रयोगस् तु कुसीदं वृद्धिजीविका
(२.८.११८०) याञ्चयाऽऽप्तं याचितकं निमयादापमित्यकम्
(२.८.११८१) उत्तमर्णाऽधमर्णौ द्वौ प्रयोक्तृ ग्राहकौ क्रमात्
(२.८.११८२) कुसीदिको वार्धुषिको वृद्ध्याजीवश् च वार्धुषिः
(२.८.११८३) क्षेत्राजीवः कर्षकश्च कृषिकश् च कृषीवलः
(२.८.११८४) क्षेत्रं व्रैहेयशालेयं व्रीहिशाल्युद्भवोचितम्
(२.८.११८५) यव्यं यवक्यं यष्टिक्यं यवाऽऽदिभवनं हि यत्
(२.८.११८६) तिल्यतैलीनवन् माषोमाऽणुभङ्गाद्विरूपता
(२.८.११८७) मौद्गीनकौद्रवीणाऽऽदि शेषधान्योद्भवक्षमम्
(२.८.११८८) शाकक्षेत्राऽऽदिके शाकशाकतं शाकशाकिनम्
(२.८.११८९) बीजाकृतं तूप्रकृष्टे सीत्यं कृष्टं च हल्यवत्
(२.८.११९०) त्रिगुणाकृतं तृतीयाकृतं त्रिहल्यं त्रिसीत्यमपि तस्मिन्
(२.८.११९१) द्विगुणाकृते तु सर्वं पूर्वं शम्बाकृतमपीह
(२.८.११९२) द्रोणाऽऽढकाऽऽदि वापाऽऽदौ द्रौणिकाऽऽढकिकाऽऽदयः
(२.८.११९३) खारीवापस् तु खारीक उत्तमर्णाऽऽदयस् त्रिषु
(२.८.११९४) पुन्नपुंसकयोर् वप्रः केदारः क्षेत्रमस्य तु
(२.८.११९५) कैदारकं स्यात् कैदार्यं क्षेत्रं कैदारिकं गणे
(२.८.११९६) लोष्टानि लेष्टवः पुंसि कोटिशो लोष्टभेदनः
(२.८.११९७) प्राजनं तोदनं तोत्रं खनित्रमवदारणे
(२.८.११९८) दात्रं लवित्रमाबन्धो योत्रं योक्त्रमथो फलम्
(२.८.११९९) निरीषं कुटकं फालः कृषको लांगलं हलम्
(२.८.१२००) गोदारणं च सीरोऽथ शम्या स्त्री युगकीलकः
(२.८.१२०१) ईष लांगलदंडः स्यात् सीत लाङ्गलपद्धतिः
(२.८.१२०२) पुंसि मेधिः खले दारु न्यस्तं यत् पशुबन्धने
(२.८.१२०३) आशुर् व्रीहिः पाटलः स्याच्छितशूकयवौ समौ
(२.८.१२०४) तोक्मस् तु तत्र हरिते कलायस् तु सतीनकः
(२.८.१२०५) हरेणुरेणुकौ चाऽस्मिन् कोरदूषस् तु कोद्रवः
(२.८.१२०६) मंगल्यको मसूरोऽथ मकुष्ठक मयुष्ठकौ
(२.८.१२०७) वनमुद्गे सर्षपे तु द्वौ तंतुभकदम्बकौ
(२.८.१२०८) सिद्धार्थस् त्वेष धवलो गोधूमः सुमनः समौ
(२.८.१२०९) स्याद् यावकस् तु कुल्माषश् चणको हरिमन्थकः
(२.८.१२१०) द्वौ तिले तिलपेजश् च तिलपिञ्जश् च निष्फले
(२.८.१२११) क्षवः क्षुताभिजननो राजिका कृष्णिकाऽऽसुरी
(२.८.१२१२) स्त्रियौ कङ्गुप्रियङ्गू द्वे अतसी स्यादुमा क्षुमा
(२.८.१२१३) मातुलानी तु भङ्गायां व्रीहि भेदस् त्वणुः पुमान्
(२.८.१२१४) किंशारुः सस्यशूकं स्यात् कणिशं सस्यमञ्जरी
(२.८.१२१५) धान्यं व्रीहिः स्तम्बकरिः स्तम्बो गुच्छस् तृणादिनः
(२.८.१२१६) नाडी नालं च काण्डोऽस्य पलालोस्त्री स निष्फलः
(२.८.१२१७) कडङ्गरो बुसं क्लीबे धान्यत्वचि तुषः पुमान्
(२.८.१२१८) शूकोऽस्त्री श्लक्ष्णतीक्ष्णाऽग्रे शमी शिम्बा त्रिषूत्तरे
(२.८.१२१९) ऋद्धमावसितं धान्यं पूतं तु बहुलीकृतम्
(२.८.१२२०) माषाऽऽदयः शमीधान्ये शूकधान्ये यवाऽऽदयः
(२.८.१२२१) शालयः कलमाद्याश् च षष्टिकाद्याश् च पुंस्यमी
(२.८.१२२२) तृणधान्यानि नीवाराः स्त्री गवेधुर् गवेधुका
(२.८.१२२३) अयोग्रं मुसलोऽस्त्री स्यादुदूखलमुलूखलम्
(२.८.१२२४) प्रस्फोटनं शूर्पमस्त्री चालनी तितउः पुमान्
(२.८.१२२५) स्यूतप्रसेवौ कण्डोलपिटौ कटकिलिञ्जकौ
(२.८.१२२६) समानौ रसवत्यां तु पाकस्थानमहानसे
(२.८.१२२७) पौरोगवस् तदध्यक्षः सूपकारास् तु बल्लवाः
(२.८.१२२८) आरालिका आन्धसिकाः सूदा औदनिका गुणाः
(२.८.१२२९) आपूपिकः कान्दविको भक्ष्यकार इमे त्रिषु
(२.८.१२३०) अश्मन्तमुद्धानमधिश्रयणी चुल्लिरन्तिका
(२.८.१२३१) अङ्गारधानिकऽअंगारशकट्यपि हसन्त्यपि
(२.८.१२३२) हसन्यप्यथ न स्त्री स्यादङ्गारोऽलातमुल्मुकम्
(२.८.१२३३) क्लीबेऽम्बरीपं भ्राष्ट्रो ना कन्दुर् वा स्वेदनी स्त्रियाम्
(२.८.१२३४) अलिञ्जरः स्यान्मणिकं कर्कर्य्यलुर् गलन्तिका
(२.८.१२३५) पिठरः स्थाल्युखा कुण्डं कलशस् तु त्रिषु द्वयोः
(२.८.१२३६) घटः कुटनिपावस्त्री शरावो वर्धमानकः
(२.८.१२३७) ऋजीषं पिष्टपचनं कंसोऽस्त्री पानभाजनम्
(२.८.१२३८) कुतूः कृत्तेः स्नेहपात्रं सैवाऽल्पा कुतुपः पुमान्
(२.८.१२३९) सर्वमावपनं भाण्डं पात्रामत्रे च भाजनम्
(२.८.१२४०) दर्विः कम्बिः खजाका च स्यात् तद्दूर् दारुहस्तकः
(२.८.१२४१) अस्त्री शाकं हरितकं शिग्रुरस्य तु नाडिका
(२.८.१२४२) कलम्बश् च कदम्बश् च वेषवार उपस्करः
(२.८.१२४३) तिन्तिडीकं च चुक्रं च वृक्षाम्लमथ वेल्लजम्
(२.८.१२४४) मरीचं कोलकं कृष्णभूषणं धर्मपत्तनम्
(२.८.१२४५) जीरको जरणोऽजाजि कणाः कृष्णे तु जीरके
(२.८.१२४६) सुषवी कारवी पृथ्वी पृथुः कालोपकुञ्जिका
(२.८.१२४७) आर्द्रकं शृङ्गबेरं स्यादथ छत्रा वितुन्नकम्
(२.८.१२४८) कुस्तुम्बरु च धान्याकमथ शुण्ठी महौषधम्
(२.८.१२४९) स्त्रीनपुंसकयोर्विश्वं नागरं विश्वभेषजम्
(२.८.१२५०) आरनालकसौवीरकुल्माषऽभिशुतानि च
(२.८.१२५१) अवन्तिसोमधान्याम्लकुञ्जलानि च काञ्जिके
(२.८.१२५२) सहस्रवेधि जतुकं बल्हीकं हिङ्गु रामठम्
(२.८.१२५३) तत्पत्री कारवी पृथ्वी बाष्पिका कबरी पृथुः
(२.८.१२५४) निशाऽऽख्या काञ्चनी पीता हरिद्रा वरवर्णिनी
(२.८.१२५५) सामुद्रं यत् तु लवणमक्षीवं वशिरं च तत्
(२.८.१२५६) सैन्धवोऽस्त्री शीतशिवं माणिमन्थं च सिन्धुजे
(२.८.१२५७) रौमकं वसुकं पाक्यं बिडं च कृतके द्वयम्
(२.८.१२५८) सौवर्चलेऽक्षरुचके तिलकं तत्र मेचके
(२.८.१२५९) मत्स्यन्डी फाणितं खण्डविकारे शर्करा सिता
(२.८.१२६०) कूर्चिका क्षीरविकृतिः स्याद्रसाला तु मार्जिता
(२.८.१२६१) स्यात्तेमनं तु निष्ठानं त्रिलिङ्गा वासिताऽवधेः
(२.८.१२६२) शूलाकृतं भटित्रं च शूल्यमुख्यं तु पैठरम्
(२.८.१२६३) प्रणीतमुपसंपन्नं प्रयस्तं स्यात्सुसंस्कृतम्
(२.८.१२६४) स्यात्पिच्छिलं तु विजिलं संमृष्टं शोधितं समे

(२.८.१२६५) चिक्कणं मसृणं स्निग्धं तुल्ये भावितवासिते
(२.८.१२६६) आपक्कं पौलिरभ्यूषो लाजाः पुंभूम्नि चाऽक्षताः
(२.८.१२६७) पृथुकः स्याच्चिपिटको धाना भृष्टयवे स्त्रियः
(२.८.१२६८) पूपोऽपूपः पिष्टकः स्यात्करम्भो दधिसक्तवः
(२.८.१२६९) भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री स दीदिविः
(२.८.१२७०) भिस्सटा दग्धिका सर्वरसाऽग्रे मण्डमस्त्रियाम्
(२.८.१२७१) मासराऽऽचामनिस्रावा मण्डे भक्तसमुद्भवे
(२.८.१२७२) यवागूरुष्णिका श्राणा विलेपी तरला च सा
(२.८.१२७३) म्रक्षणाऽभ्यञ्जने तैलं कृसरस्तु तिलौदनः
(२.८.१२७४) गव्यं त्रिषु गवां सर्वं गोविड्गोमयस्त्रियाम्
(२.८.१२७५) तत्तु शुष्कं करीषोऽस्त्री दुग्धं क्षीरं पयस्समम्
(२.८.१२७६) पयस्यमाज्यदध्याऽऽदि त्रप्स्यं दधि धनेतरत्
(२.८.१२७७) घृतमाज्यं हविः सर्पिर् नवनीतं नवोद्धृतम्
(२.८.१२७८) तत्तु हैयङ्गवीनं यत् ह्योघोदोहोद्भवं गृतम्
(२.८.१२७९) दन्डाहतं कालशेयमरिष्टमपि गोरसः
(२.८.१२८०) तक्रं ह्युदश्विन् मथितं पादाम्ब्वर्धाम्बु निर्जलम्
(२.८.१२८१) मन्डम् दधिभवं मस्तु पीयूषोऽभिनवं पयः
(२.८.१२८२) अशनाया बुभुक्षा क्षुद् ग्रासस्तु कवलः पुमान्
(२.८.१२८३) सपीतिः स्त्री तुल्यपानं सग्धिः स्त्री सहभोजनम्
(२.८.१२८४) उदन्या तु पिपासा तृट् तर्षो जग्धिस्तु भोजनम्
(२.८.१२८५) जेमनं लेह आहारो निघासो न्याद इत्यपि
(२.८.१२८६) सौहित्यं तर्पणं तृप्तिः फेला भुक्तसमुज्झितम्
(२.८.१२८७) कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम्
(२.८.१२८८) गोपे गोपाल गोसंख्य गोधुगाभीर वल्लवाः
(२.८.१२८९) गोमहिष्याऽऽदिकं पादबन्धनं द्वौ गवीश्वरे
(२.८.१२९०) गोमान् गोमी गोकुलं तु गोधनं स्यात्गवां व्रजे
(२.८.१२९१) त्रिष्वाशितंगवीनं तद्गावो यत्राऽशिताः पुरा
(२.८.१२९२) उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः
(२.८.१२९३) अनड्वान् सौरभेयो गौरुक्ष्णां संहतिरौक्षकम्
(२.८.१२९४) गव्या गोत्रा गवां वत्सधेन्वोर् वात्सकधैनुके
(२.८.१२९५) उक्षा महान् महोक्षः स्याद्वृद्धोक्षस्तु जरद्गवः
(२.८.१२९६) उत्पन्न उक्षा जातोक्षः सद्यो जातस्तु तर्णकः
(२.८.१२९७) शकृत्करिस्तु वत्सस्याद् दम्यवत्सतरौ समौ
(२.८.१२९८) आर्षभ्यः षण्डतायोग्यः षण्डो गोपतिरिट्चरः
(२.८.१२९९) स्कन्धदेशे स्वस्य वहः सास्ना तु गलकम्बलः
(२.८.१३००) स्यान्नस्तितस्तु नस्योतः प्रष्ठवाड् युगपार्श्वगः
(२.८.१३०१) युगाऽऽदीनां तु वोढारो युग्यप्रासंग्यशाकटाः
(२.८.१३०२) खनति तेन तद्वोढाऽस्येदं हालिकसैरिकौ
(२.८.१३०३) धुर्वहे धुर्य धौरेय धुरीणाः सधुरन्धराः
(२.८.१३०४) उभावेकधुरीणैकधुरावेकधुरावहे
(२.८.१३०५) स तु सर्वधुरीणः स्याद्यो वै सर्वधुराऽऽवहः
(२.८.१३०६) माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी
(२.८.१३०७) अर्जुन्यघ्न्या रोहिणी स्यादुत्तमा गोषु नौचिकी
(२.८.१३०८) वर्णाऽऽदिभेदात्संज्ञाः स्युः शबलीधवलाऽऽदयः
(२.८.१३०९) द्विहायनी द्विवर्षा गौरेकाऽब्दा त्वेकहायनी
(२.८.१३१०) चतुरब्दा चतुर्हाण्येवं त्र्यब्दा त्रिहायणी
(२.८.१३११) वशा वन्ध्याऽवतोका तु स्रवद्गर्भाऽथ संधिनी
(२.८.१३१२) आक्रान्ता वृषभेणाथ वेहद् गर्भोपघातिनी
(२.८.१३१३) काल्योपसर्या प्रजने प्रष्ठौही बालगर्भिणी
(२.८.१३१४) स्यादचण्डी तु सुकरा बहुसूतिः परेष्टुका
(२.८.१३१५) चिरप्रसूता बष्कयणी धेनुः स्यात्नवसूतिका
(२.८.१३१६) सुव्रता सुखसंदोह्या पीनोध्नी पीवरस्तनी
(२.८.१३१७) द्रोणक्षीरा द्रोणदुग्धा धेनुष्या बन्धके स्थिता
(२.८.१३१८) समांसमीना सा यैव प्रतिवर्षप्रसूतये
(२.८.१३१९) ऊधस्तु क्लीबमापीनं समौ शिवककीलकौ
(२.८.१३२०) न पुम्सि दाम संदानं पशुरज्जुस्तु दामनी
(२.८.१३२१) वैशाखमन्थमन्थान मन्थानो मन्थदन्डके
(२.८.१३२२) कुठरो दन्डविष्कम्भो मन्थनी गर्गरी समे
(२.८.१३२३) उष्ट्रे क्रमेलकमयमहाङ्गाः करभः शिशुः
(२.८.१३२४) करभाः स्युः शृङ्खलका दारवैः पादबन्धनैः
(२.८.१३२५) अजा च्छागी शुभच्छागबस्तच्छगलका अजे
(२.८.१३२६) मेढ्रोरभ्रोरणोर्णायु मेष वृष्णय एडके
(२.८.१३२७) उष्ट्रोरभ्राऽजवृन्दे स्यादौष्ट्रकौरभ्रकाऽऽजकम्
(२.८.१३२८) चक्रीवन्तस्तु वालेया रासभा गर्दभाः खराः
(२.८.१३२९) वैदेहकः सार्थवाहो नैगमो वाणिजो वणिक्
(२.८.१३३०) पण्याजीवो ह्यापणिकः क्रयविक्रयिकश्च सः
(२.८.१३३१) विक्रेता स्याद्विक्रयिकः क्रायिकक्रयिकौ समौ
(२.८.१३३२) वाणिज्यं तु वणिज्या स्यान् मूल्यं वस्नोऽप्यवक्रयः
(२.८.१३३३) नीवी परिपणो मूलधनं लाभोऽधिकं फलम्
(२.८.१३३४) परिदानं परीवर्तो नैमेयनियमावपि
(२.८.१३३५) पुमानुपनिधिर्न्यासः प्रतिदानं तदर्पणम्
(२.८.१३३६) क्रये प्रसारितं क्रय्यं क्रेयं क्रेतव्यमात्रके
(२.८.१३३७) विक्रेयं पणितव्यं च पण्यं क्रय्याऽऽदयस्त्रिषु
(२.८.१३३८) क्लीबे सत्यापनं सत्यङ्कारः सत्याकृतिः स्त्रियाम्
(२.८.१३३९) विपणो विक्रयः संख्याः संख्येये ह्यादश त्रिषु
(२.८.१३४०) विंशत्याऽऽद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः
(२.८.१३४१) संख्याऽर्थे द्विबहुत्वे स्तस् तासु चाऽऽनवतेः स्त्रियः
(२.८.१३४२) पङ्क्तेः शतसहस्राऽऽदि क्रमाद्दशगुणोत्तरम्
(२.८.१३४३) यौतवं द्रुवयं पाय्यमिति मानाऽर्थकं त्रयम्
(२.८.१३४४) मानं तुलाङ्गुलिप्रस्थैर् गुञ्जाः पञ्जाऽऽद्यमाषकः
(२.८.१३४५) ते षोडशाऽक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयम्
(२.८.१३४६) सुवर्णबिस्तौ हेम्नोऽक्षे कुरुबिस्तस्तु तत्पले
(२.८.१३४७) तुला स्त्रियां पलशतं भारः स्याद्विंशतिस्तुलाः
(२.८.१३४८) आचितो दश भाराः स्युः शाकटो भार आचितः
(२.८.१३४९) कार्षापणः कार्षिकः स्यात् कार्षिके ताम्रिके पणः
(२.८.१३५०) अस्त्रियामाढकद्रोणौ खारी वाहो निकुञ्चकः

(२.८.१३५१) कुडवः प्रस्थ इत्याऽऽद्याः परिमाणाऽर्थकाः पृथक्
(२.८.१३५२) पादस्तुरीयो भागः स्यादंशभागौ तु वण्टके
(२.८.१३५३) द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु
(२.८.१३५४) हिरण्यं द्रविणं द्युम्नमर्थरैविभवा अपि
(२.८.१३५५) स्यात्कोशश्च हिरण्यं च हेमरूप्ये कृताऽकृते
(२.८.१३५६) ताभ्यां यदन्यत् तत्कुप्यं रूप्यं तद् द्वयमाहतम्
(२.८.१३५७) गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः
(२.८.१३५८) शोणरत्नं लोहितकः पद्मरागोऽथ मौक्तिकम्
(२.८.१३५९) मुक्ताऽथ विद्रुमः पुंसि प्रवालं पुन्नपुंसकम्
(२.८.१३६०) रत्नं मणिर्द्वयोरश्मजातौ मुक्ताऽऽदिकेऽपि च
(२.८.१३६१) स्वर्णं सुवर्णं कनकं हिरण्यं हेमकाटकम्
(२.८.१३६२) तपनीयं शातकुम्भं गाङ्गेयं भर्म कर्वुरम्
(२.८.१३६३) चामीकरं जातरूपं महारजतकाञ्चने
(२.८.१३६४) रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम्
(२.८.१३६५) अलङ्कारसुवर्णं यच्छृङ्गीकनकमित्यदः
(२.८.१३६६) दुर्वर्णं रजतं रूप्यं खर्जूरं श्वेतमित्यपि
(२.८.१३६७) रीतिः स्त्रियामारकूटो न स्त्रियामथ ताम्रकम्
(२.८.१३६८) शुल्बं म्लेच्छमुखं द्व्यष्टवरिष्टोदुम्बराणि च
(२.८.१३६९) लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिन्डं कालायसाऽयसी
(२.८.१३७०) अश्मसारोऽथ मण्डूरं सिंहाणमपि तन्मले
(२.८.१३७१) सर्वं च तैजसं लौहं विकारस्त्वयसः कुशी
(२.८.१३७२) क्षारः काचोऽथ चपलो रसः सूतश्च पारदे
(२.८.१३७३) गवलं माहिषं शृङ्गमभ्रकं गिरिजाऽमले
(२.८.१३७४) स्रोतोऽञ्जनं तु सौवीरं कापोताञ्जनयामुने
(२.८.१३७५) तुत्थाञ्जनं शिखिग्रीवं वितुन्नकमयूरके
(२.८.१३७६) कर्परी दार्विकाक्कातोद्भवं तुत्थं रसाञ्जनम्
(२.८.१३७७) रसगर्भं तार्क्ष्यशैलं गन्धाश्मनि तु गन्धिकः
(२.८.१३७८) सौगन्धिकश्च चक्षुष्याकुलाल्यौ तु कुलत्थिका
(२.८.१३७९) रीतिपुष्पं पुष्पके तु पुष्पकं कुसुमाञ्जनम्
(२.८.१३८०) पिञ्जरं पीतनं तालमालं च हरितालके
(२.८.१३८१) गैरेयमर्थ्यं गिरिजमश्मजं च शिलाजतु
(२.८.१३८२) वोलगन्धरसप्राणपिण्डगोपरसाः समाः
(२.८.१३८३) डिण्डीरोऽब्धिकफः फेनः सिन्दूरं नागसंभवम्
(२.८.१३८४) नागसीसकयोगेष्टवप्राणि त्रिषु पिञ्चटम्
(२.८.१३८५) रङ्गवङ्गे अथ पिचुस् तूलोऽथ कमलोत्तरम्
(२.८.१३८६) स्यात्कुसुम्भं वह्निशिखं महारजनमित्यपि
(२.८.१३८७) मेषकम्बल ऊर्णायुः शशोर्णं शशलोमनि
(२.८.१३८८) मधु क्षौद्रं माक्षिकाऽऽदि मधूच्छिष्टं तु सिक्थकम्
(२.८.१३८९) मनःशिला मनोगुप्ता मनोह्वा नागजिह्विका
(२.८.१३९०) नैपाली कुनटी गोला यवक्षारो यवाग्रजः
(२.८.१३९१) पाक्योऽथ सर्जिकाक्षारः कापोतः सुखवर्चकः
(२.८.१३९२) सौवर्चलं स्याद्रुचकं त्वक्क्षीरी वंशरोचना
(२.८.१३९३) शिग्रुजं श्वेतमारिचं मोरटं मूलमैक्षवम्
(२.८.१३९४) ग्रन्थिकं पिप्पलीमूलं चटिकाशिर इत्यपि
(२.८.१३९५) गोलोमी भूतकेशो ना पत्राङ्गं रक्तचन्दनम्
(२.८.१३९६) त्रिकटु त्र्यूपणं व्योपं त्रिफला तु फलत्रिकम्

। इति वैश्यवर्गः ९, अत्र मूलश्लोकाः १११

शूद्रवर्गः ।

(२.८.१३९७) शूद्राश् चाऽवरवर्णाश् च वृषलाश् च जघन्यजाः ।अथ शूद्र
(२.८.१३९८) आचण्डालात् तु संकीर्णा अम्बष्ठकरणाऽदयः
(२.८.१३९९) शूद्राविशोस् तु करणोऽम्बष्ठो वैश्याद्विजन्मनोः
(२.८.१४००) शूद्राक्षत्रिययोरुग्रो मागधःक्षत्रियाविशोः
(२.८.१४०१) माहिषोऽर्याक्षत्रिययोः क्षत्ताऽर्याशूद्रयोः सुतः
(२.८.१४०२) ब्राह्मण्यां क्षत्रियात् सूतस् तस्यां वैदेहको विशः
(२.८.१४०३) रथकारस् तु माहिष्यात् करण्यां यस्य संभवः
(२.८.१४०४) स्याच् चण्डालस् तु जनितो ब्राह्मण्यां वृषलेन यः
(२.८.१४०५) कारुः शिल्पी संहतैस् तैर् द्वयोः श्रेणिः सजातिभिः
(२.८.१४०६) कुलकः स्यात् कुलश्रेष्ठी मालाकारस् तु मालिकः
(२.८.१४०७) कुम्भकारः कुलालः स्यात् पलगण्डस् तु लेपकः
(२.८.१४०८) तन्तुवायः कुविन्दः स्यात् तुन्नवायस् तु सौचिकः
(२.८.१४०९) रङ्गाजीवश् चित्रकरः शस्त्रमार्जोऽसि धावकः
(२.८.१४१०) पादकृच् चर्मकारः स्याद् व्योकारो लोहकारकः
(२.८.१४११) नाडिन्धमः स्वर्णकारः कलादो रुक्मकारकः
(२.८.१४१२) स्याच्छाङ्खिकः काम्बविकः शौल्बिकस् ताम्रकुट्टकः
(२.८.१४१३) तक्षा तु वर्धकिस् त्वष्टा रथकारश् च काष्ठतट्
(२.८.१४१४) ग्रामाऽधीनो ग्रामतक्षः कौटतक्षोऽनधीनकः
(२.८.१४१५) क्षुरी मुण्डी दिवाकीर्तिनापिताऽन्तावसायिनः
(२.८.१४१६) निर्णेजकः स्याद् रजकः शौण्डिको मण्डहारकः
(२.८.१४१७) जाबालः स्यादजाजीवो देवाजीवस् तु देवलः
(२.८.१४१८) स्यान् माया शाम्बरी मायाकारस् तु प्रतिहारकः
(२.८.१४१९) शैलालिनस् तु शैलूषा जायाजीवाः कृशाश्विनः
(२.८.१४२०) भरता इत्यपि नटाश् चारणास् तु कुशीलवाः
(२.८.१४२१) मार्दङ्गिका मौरजिकाः पाणिवादास् तु पाणिघाः
(२.८.१४२२) वेणुध्माः स्युर् वैणविका वीणावादास् तु वैणिकाः
(२.८.१४२३) जीवान्तकः शाकुनिको द्वौ वागुरिकजालिकौ
(२.८.१४२४) वैतंसिकः कौटिकश् च मांसिकश् च समं त्रयम्
(२.८.१४२५) भृतको भृतिभुक् कर्मकरो वैतनिकोऽपि सः
(२.८.१४२६) वार्तावहो वैवधिको भारवाहस् तु भारिकः
(२.८.१४२७) विवर्णः पामरो नीचः प्राकृतश् च पृथग्जनः
(२.८.१४२८) निहीनोऽपसदो जाल्मः क्षुल्लकश् चेतरश् च सः
(२.८.१४२९) भृत्ये दासेरदासेयदासगोप्यकचेटकाः
(२.८.१४३०) नियोज्यकिङ्करप्रैष्यभुजिष्यपरिचारकाः
(२.८.१४३१) पराचितपरिस्कन्दपरजातपरैधिताः
(२.८.१४३२) मान्दस् तुन्दपरिमृज आलस्यः शीतकोऽलसोऽनुष्णः
(२.८.१४३३) दक्षे तु चतुरपेशलपटवः सूत्थान उष्णश् च

(२.८.१४३४) चण्डालप्लवमातङ्गदिवाकीर्तिजनङ्गमाः
(२.८.१४३५) निपादश्वपचावन्तेवासिचाण्डालपुक्कसाः
(२.८.१४३६) भेदाः । किरातशबरपुलिन्दा म्लेच्छजातयः
(२.८.१४३७) व्याधो मृगवधाजीवो मृगयुर् लुब्धकोऽपि सः
(२.८.१४३८) कौलेयकः सारमेयः कुक्कुरो मृगदंशकः
(२.८.१४३९) शुनको भपकः श्वा स्यादलर्कस् तु स योगितः
(२.८.१४४०) श्वा विश्वकद्रुर् मृगयाकुशलः सरमा शुनी
(२.८.१४४१) विट्चरः सूकरो ग्राम्यो वर्करस् तरुणः पशुः
(२.८.१४४२) आच्छोदनं मृगव्यं स्यादाखेटोमृगया स्त्रियाम्
(२.८.१४४३) दक्षिणाऽरुर् लुब्धयोगाद् दक्षिणेर्मा कुरङ्गकः
(२.८.१४४४) चौरैकागारिकस्तेनदस्युतस्करमोपकाः
(२.८.१४४५) प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः
(२.८.१४४६) चौरिका स्तैन्यचौर्ये च स्तेयं लोप्त्रं तु तद्धने
(२.८.१४४७) वीतंसस् तूपकरणं बन्धने मृगपक्षिणाम्
(२.८.१४४८) उन्माथः कूटयन्त्रं स्याद् वागुरा मृगबन्धनी
(२.८.१४४९) शुल्बं वराटकं स्त्री तु रज्जुस् त्रिषु वटी गुणः
(२.८.१४५०) उद्घाटनं घटीयन्त्रं सलिलोद्वाहनं प्रहेः
(२.८.१४५१) पुंसि वेमा वायदण्डः सूत्राणि नरि तन्तवः
(२.८.१४५२) वाणिर् व्यूतिः स्त्रियौ तुल्ये पुस्तं लेप्याऽऽदिकर्मणि
(२.८.१४५३) पाञ्चालिका पुत्रिका स्याद् वस्त्रदन्ताऽऽदिभिः कृता
(२.८.१४५४) जतुत्रपुविकारे तु जातुपं त्रापुषं त्रिषु
(२.८.१४५५) पिटकः पेटकः पेटामञ्जूषाऽथ विहङ्गिका
(२.८.१४५६) भारयष्टिस् तदाऽऽलम्बि शिक्यं काचोऽथ पादुका
(२.८.१४५७) पादूरुपानत् स्त्री सैवाऽनुपदीना पदाऽऽयता
(२.८.१४५८) नद्ध्री वर्ध्री वरत्रा स्यादश्वाऽऽदेस् ताडनी कशा
(२.८.१४५९) चाण्डालिका तु कण्डोल वीणा चण्डालवल्लकी
(२.८.१४६०) नाराची स्यादेषणिका शाणस् तु निकषः कषः
(२.८.१४६१) व्रश्चनःपत्रपरशुरीपिका तूलिका समे
(२.८.१४६२) तैजसावर्तनी मूषा भस्त्रा चर्मप्रसेविका
(२.८.१४६३) आस्फोटनी वेधनिका कृपाणी कर्तरी समे
(२.८.१४६४) वृक्षादनी वृक्षभेदी टङ्कः पाषाणदारणः
(२.८.१४६५) क्रकचोऽस्त्री करपत्रमारा चर्मप्रभेधिका
(२.८.१४६६) सूर्मी स्थूणाऽयःप्रतिमा शिल्पं कर्म कलाऽऽदिकम्
(२.८.१४६७) प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया
(२.८.१४६८) प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात्
(२.८.१४६९) वाच्यलिङ्गाः समस् तुल्यः सदृक्षः सदृशः सदृक्
(२.८.१४७०) साधारणः समानश् च स्युरुत्तरपदे त्वमी
(२.८.१४७१) निभसंकाशनीकाशप्रतीकाशोपमाऽऽदयः
(२.८.१४७२) कर्मण्या तु विधाभृत्याभृतयो भर्म वेतनम्
(२.८.१४७३) भरण्यं भरणं मूल्यं निर्वेशः पण इत्यपि
(२.८.१४७४) सुरा हलिप्रिया हाला परिस्रुद् वरुणात्मजा
(२.८.१४७५) गन्धोत्तमाप्रसन्नेराकादम्बर्यः परिस्रुता
(२.८.१४७६) मदिरा कश्यमद्ये चाप्यवदंशस् तु भक्षणम्
(२.८.१४७७) शुण्डापानं मदस्थानं मधुवारा मधुक्रमाः
(२.८.१४७८) मध्वासवो माधवको मधु माध्वीकमद्वयोः
(२.८.१४७९) मैरेयमासवः सीधुर् मन्दको जगलः समौ
(२.८.१४८०) संधानं स्यादभिषवः किण्वं पुंसि तु नग्नहूः
(२.८.१४८१) कारोत्तरः सुरामण्ड आपानं पानघोष्ठिका
(२.८.१४८२) चपकोऽस्त्री पानपात्रं सरकोऽप्यनुतर्षणम्
(२.८.१४८३) धूर्तोऽक्षदेवी कितवोऽक्षधूर्तो द्यूतकृत् समाः
(२.८.१४८४) स्युर् लग्नकाः प्रतिभुवः सभिका द्यूतकारकाः
(२.८.१४८५) द्यूतोऽस्त्रियामक्षवती कैतवं पण इत्यपि
(२.८.१४८६) पणोऽक्षेषु ग्लहोऽक्षास् तु देवनाः पाशकाश् च ते
(२.८.१४८७) परिणायस् तु शारीणां समन्तात् नयनेऽस्त्रियाम्
(२.८.१४८८) अष्टापदं शारिफलं प्राणिवृत्तं समाह्वयः
(२.८.१४८९) उक्ता भूरिप्रयोगत्वादेकस्मिन् येऽत्र यौगिकाः
(२.८.१४९०) ताद्धर्म्यादन्यतो वृत्तावूत्या लिङ्गाऽन्तरेऽपि ते
। इति शूद्रवर्गः १० अत्र मूलश्लोकाः ४६ ॥ क्षे ॥
(२.८.१४९१) इत्यमरसिंहकृतौ नामलिङ्गानुशासने द्वितीयः काण्डो
(२.८.१४९२) भूम्याऽऽदिःसाऽङ्ग एव समर्थितः ।अत्र मूलश्लोकाः ७३५
(२.८.१४९३) सर्वे च मिलित्वा ७५० प्र का मू श्लो २८१ ।क्षे श्लो १८ सर्वे
(२.८.१४९४) एवं मू श्लो १०१७ क्षे श्लो ३२ सर्वे मि १०४९

Please send corrections to sanskrit@cheerful.com
Last updated July 1, 2001